# Forward

This is a book on sanskrit grammar written by jayAnandasUri and commented upon by AshAnanda dayAsundara. This book is intended to make the samAsaprakaraNa of siddhahemazabdAnuzAsanam (सिद्धहेमशब्दानुशासनम्) of hemacandrAcArya easy to comprehend. The book deals with all categories of samAsas one by one, unlike the book of hemacandrAcArya. The commentary has also mentioned the relevant sutras at some places. Due care has been taken to give the sutra and its meaning (as mentioned in laghuvRtti) at the footnote (Edition used is mAtA sAdhvIjI zrI manoharazrIjI janmazatAbdI jaina granthamAlA – puSpam 1, critically edited by muni jambUvijayaji, published by zrI hemacandrAcArya jaina jJAnamandira, paTan, 1994). The book uses the examples from laghuvRtti most of the times, but it also introduces some of his own. The author's name is clear, but the commentator's name seems to be very longish. I have take the name as AzAnanda dayAsundara.

I have perused two manuscripts from the hemacandrAcArya jJAna bhaNDAra, pATan for editing this work. The first manuscript is termed as manuscript क – grantha 2279 of the bhandara(along with ShaTkArakaprakaraNa). The second manuscript is termed as manuscript ख – grantha 2278 (along with kRtpratyaya). The variations have been pointed out in the footnote.

The timing of this book is not clear, but the first manuscript tells us in colophon - सं० १५२१ वर्षे श्री०पतापक्ष्ये लिखापितं लेखक सोमापार्श्वैः. The reading is highly erroneous, but this clearly places the work before 1521 vikram samvat. So, it is a post hemacandra and pre vikram samvat 1521 work for sure. The second manuscript colophon reads -

श्रीगुरुपदाम्बुजामेघुकृधनविजविबुधपदसेवी यो गुणविजयः प्राज्ञो । भृद्धुवि विख्यातवरमुक्ति ॥ तच्छिष्याभ्यांमुक्त्वा प्रतिरिहमिह धर्मरामविजयाभ्यां राजनगरे चित्कोशे । जयतां जिनशासनं यावत् ॥

(श्रीगौतमाय नमः)[1]

**नाम नाम्नैकार्थ्ये समासो बहुलम्[2] ।**

बहुव्रीह्यादि संक्रमाभावे यत्रैकार्थता[3] तत्रानेनैव समासः । यथा विस्पष्टं पटुः विस्पष्टपटुः । दारुणमध्यायको दारुणाध्यायक इत्यादि । बहुलवचनात्क्वचिदनामाऽपि समस्यते । यथा भात्यर्को यस्मिन् तद्भात्यर्कं नभः ॥

संप्रति बहुव्रीह्यादीनां सामान्यतो लक्षणमाचष्टे[4] ।

**यदा बहुव्रीहिरुदीरितो बुधैर्द्वन्द्वश्चकारैरथ संख्यया द्विगुः ।**
**चासौ च तत्स्यादिति कर्मधारयः क्लीबोऽव्ययी तत्पुरुषोऽन्यलक्षणः[5] ॥ १**

सुगमम्[6] ।

"यथोद्देशं निर्देश" इति न्यायात् प्रथमं बहुव्रीहिविशेषलक्षणं प्रतिपादयिषुराह[7] ।

**संख्यासन्नप्रमुखाः संख्याभिर्यद्वदा दिग्दिशा च ।**
**नाम्ना सहाव्यये इति[8] समासकरणे बहुव्रीहिः ॥ २**

सुज्वार्थे वर्तमानं वारस्तस्मिन् विकल्पे संशये च वर्तमानं[9] संख्यावाचि नाम तथा द्वितीयाद्यंतस्याऽन्यपदस्याऽर्थे (संख्येये वाच्ये)[10]" ।[11] "आसन्नाऽदूराधिकाऽध्यर्धाः शब्दाः" [12] अर्धपूर्वपदं च पूरणप्रत्ययान्तं नाम[13] । तथा तृतीयपदस्थस्याव्ययशब्दस्यात्र[14]

---

[1] ख - नास्ति

[2] सिद्धहेमशब्दानुशासनम् - नाम नाम्नैकार्थ्ये समासो बहुलम् (३.१.१८)

नाम नाम्ना सह ऐकार्थ्ये सामर्थ्यविशेषे सति समासो बहुलं स्यात, लक्षणमिदमधिकारश्च, तेन बहुव्रीह्यादिसंज्ञाभावे यत्रैकार्थता तत्रानेनैव समासः । विस्पष्टपटुः, दारुणाध्यायकः, सर्वचर्मीणो रथः, कन्येइव, श्रुतपूर्वः । नामेति चरन्ति गावो धनमस्य । नाम्नेति किम् ? चैत्रः पचति ॥

[3] ख - यथैकार्थता

[4] ख - लक्षणमाह

[5] ख - तत्पुरुषो नपुंसकलक्षणः

[6] ख - नास्ति

[7] ख - बहुव्रीहेर्विशेषतो लक्षणमभिधित्सुराह

[8] क - नाम्ना सहाव्ययेति

[9] क - सुचोऽर्थो वारस्तस्मिन् विकल्पे संशये च वर्तमानं,
ख - सुज्वार्थे वर्तमानं

[10] ख - नास्ति

[11] सिद्धहेमशब्दानुशासनम् - सुज्वार्थे संख्या संख्येये संख्यया बहुव्रीहिः (३.१.१९)

सुजर्थो वारः, वार्थो विकल्पः संशयो वा, तद्वृत्ति संख्यावाचि नाम सङ्ख्येयार्थेन सङ्ख्यानाम्ना सहैकार्थ्ये समासो बहुव्रीहिश्च स्यात् । द्विदशाः, द्वित्राः । सङ्ख्येति किम् ? गावो वा दश वा । सङ्ख्ययेति किम् ? दश वा गावो वा । सङ्ख्येय इति किम् ? द्विर्विंशतिर्गवाम् ॥

[12] ख - आसन्नाऽदूराधिकाऽध्यर्धशब्दाः
सिद्धहेमशब्दानुशासनम् - आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे (३.१.२०)

संबंधा"दव्ययं"[15] च नाम (संख्येये वाच्ये)[16] संख्यानाम्ना समस्यते स च बहुव्रीहिः । तथा हि ।

**सुजर्थे**[17] ।

द्विर्दश[18] द्विदशाः विंशतिरित्यर्थः । एवं त्रिदशाः त्रिंशदित्यर्थः[19] । द्विर्विंशतिः द्विविंशाः[20] चत्वारिंशदित्यर्थः । एवं त्रिविंशाः षष्टिरित्यर्थः ।

**विकल्पार्थे** ।

द्वौ वा त्रयो वा द्वित्राः । एवं त्रिचतुराः चतुःपञ्चाः । पञ्चषाः । (सप्ताष्टा)[21] । विंशः संनिवेशः[22] विंशतिः । इत्यादि सर्वत्र "प्रमाणीसंख्याड्ड"[23] इति डप्रत्ययः । "तेर्डिति"[24] इति विंशतेस्तेर्लोपः[25] ।

**आसन्नादयः** ।

आसन्ना दश येषां ते आसन्नदशाः । एवमदूरदशाः । नव वा एकादश वा इत्यर्थः[26] । तथाऽधिका दश येषां तेऽधिकदशाः[27] नवैव । एवमासन्नविंशा अदूरविंशा एकोनविंशतिर्वा[28] एकविंशतिर्वा । (अधिकविंशा एकोनविंशतिरेव[29] । एवमासन्नत्रिंशा)[30]

---

आसन्नादि अर्धपूर्वपदं च पूरणप्रत्ययान्तं नाम संख्यानाम्नैकार्थ्ये समासः स्यात्, दिवीयाद्यन्तस्यान्यपदस्यार्थे सङ्ख्येये वाच्ये, स च बहुव्रीहिः । आसन्नदशाः, अदूरदशाः, अधिकाद्शाः, अध्यर्धविंशाः, अर्धपञ्चमविंशाः ॥

[13] ख - नाम २ = नाम नाम

[14] ख - तृतीयपदस्थस्याव्ययशब्दस्यात्रापि

[15] सिद्धहेमशब्दानुशासनम् - अव्ययम् (३.१.२१)

अव्ययं नाम सङ्ख्यानाम्नैकार्थ्ये समस्यते द्वितीयाद्यन्तार्थे सङ्ख्येये वाच्ये स च बहुव्रीहिः । उपदशाः ॥

[16] क - नास्ति

[17] ख - सुजर्थो वारस्तस्मिन्

[18] क - द्वि दश द्विदशाः

[19] ख - पुस्तके संख्याभिः निर्दिष्टाः, न तु शब्दैः - ३० इत्यर्थः । सर्वत्र एवमेव ।

[20] क - द्विर्विंशाः

[21] ख - नास्ति

[22] क, ख - संनिवेशं

[23] सिद्धहेमशब्दानुशासनम् - प्रमाणीसंख्याड्डः (७.३.१२८)

प्रमाण्यन्तात् सङ्ख्यार्थाच्च बहुव्रीहेर्डः स्यात् । स्त्रीप्रमाणाः कुटुम्बिनः, द्वित्राः ॥

[24] सिद्धहेमशब्दानुशासनम् - विशतेस्तेर्डिति (७.४.६७)

अस्यापदस्य तेर्डिति तद्धिते लुक् स्यात् । विंशकः पटः ॥

[25] क - विंशतितेलोपः, ख - विंशतितेर्लुप्

[26] ख - वेत्यर्थः

[27] ख - ते अधिकदशाः

[28] क - एकान्नविंशतिर्वा

[29] क - एकान्नविंशतिरेव

[30] ख - नास्ति

इत्यादि वाच्यम् । तथाऽधिकमर्धं यस्याः साऽध्यर्धाऽध्यर्धा विंशतिर्येषां तेऽध्यर्धविंशाः । त्रिंशदित्यर्थः । अध्यर्धचत्वारिंशाः षष्टिरित्यर्थः । अर्धपूर्वपदः पूरणः[31] । पञ्चानां पूरणी पञ्चमी । "नो मट्"[32] इति मट् प्रत्ययः ॥ "अणञे०"[33] इति टित्त्वाङ्डीप्रत्ययः । "अस्य ङ्यां लुक्"[34] इति अकारलुक्[35] । ततोऽर्धा पंचमी यासां ता अर्धपंचमाः । "पूरणीभ्यस्तत्प्राधान्येऽप्"[36] प्र० । अर्धपंचमा विंशतयो येषां तेऽर्धपञ्चविंशाः नवतिरित्यर्थः[37] । एवमर्धचतुर्थत्रिंशाः पञ्चोत्तरशतमित्यर्थः । अर्धतृतीयचत्वारिंशाः शतमित्यर्थः । सर्वत्र "परतः स्त्री पुंवत् स्त्र्येकार्थ्येऽनूङ्"[38] इति (पूर्वपदे)[39] पुंवद्भावः । एवमग्रेऽपि ज्ञेयम् । तथा ।

**अव्ययम् ।**

उप समीपे दश येषां ते उपदशाः । नव वा एकादश वा । एवमुपपंचदशाः (उपविंशाः)[40] इत्यादि ।

एकमनेकमव्ययं[41] च नाम नाम्ना द्वितीयाद्यन्तान्यशब्दार्थे[42] समस्यते ।[43] स च बहुव्रीहिः ।

---

[31] क - अर्धपूर्वः पूर्णाः ।

[32] सिद्धहेमशब्दानुशासनम् - नो मट् (७.१.१५९)

असंख्यादेर्नान्तायाः संख्यायाः संख्यापूरणे मट् स्यात् । पंचमी । असंख्यादेरित्येव - द्वादशः ॥

[33] सिद्धहेमशब्दानुशासनम् - अणञेयेकण्-नञ्-स्नञ्-टिताम् (२.४.२०)

अणादीनां योऽत् तदन्तात्तेषामेव स्त्रियां ङीः स्यात् । औपगवी, बैदी, सौपर्णेयी, आक्षिकी, स्त्रैणी, पौंस्नी, जानुदघ्नी ॥

[34] सिद्धहेमशब्दानुशासनम् - अस्य ङ्यां लुक् (२.४.८६)

ङ्यां परेऽतो लुक् स्यात् । मद्रचरी ॥

[35] ख - अलोपः

[36] सिद्धहेमशब्दानुशासनम् - पूरणीभ्यस्तत्प्राधान्येऽप् (७.३.१३०)

पूरणप्रत्ययान्ता या स्त्री, तदन्ताद्बहुव्रीहेरप् स्यात्, पूरण्याः प्राधान्ये समासार्थत्वे सति । कल्याणपञ्चमा रात्रयः । तत्प्राधान्य इति किम् ? कल्याणपञ्चमीकः पक्षः ॥

[37] क - ततोऽर्धा पंचमी विंशति येषां तेऽर्धपंचविंशाः । नवतिरित्यर्थः ।

[38] सिद्धहेमशब्दानुशासनम् - परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् (३.२.४९)

परतः विशेष्यवशात् स्त्रीलिङ्गः स्त्रीवृत्तावेकार्थे उत्तरपदे पुंवत् स्यात् । न तूङन्तः । दर्शनीयभार्यः । परत इति किम् ? द्रोणीभार्यः । स्त्रीति किम् ? खलपुदृष्टिः । स्त्र्येकार्थ इति किम् ? गृहिणीनेत्रः, कल्याणीमाता । अनूङिति किम् ? करभोरूभार्यः ॥

[39] ख - नास्ति

[40] ख - नास्ति

[41] ख - एकमनेकार्थमव्ययं

[42] क, ख - द्वितीयाद्यंतंयच्छब्दार्थे (लघुवृत्तिस्थः पाठो गृहीतः)

[43] सिद्धहेमशब्दानुशासनम् - एकार्थं चानेकं च (३.१.२२)

एकमनेकं च एकार्थं समानाधिकरणम् अव्ययं च नाम्ना द्वितीयाद्यन्तान्यपदस्यार्थे समस्यते, स च बहुव्रीहिः । आरूढवानरो वृक्षः, सुसूक्ष्मजटकेशः, उच्चैर्मुखः ॥

तथा हि ।

**एकं** नाम ।

आरूढो वानरो यं वृक्षं स आरूढवानरो वृक्षः । आरूढौ वानरौ यं आरूढा वानरा वा यं स आरूढवानरो वृक्षः । ३

आरूढो वानरो यौ आरूढौ वानरौ यौ आरूढा वानरा यौ तौ आरूढवानरौ वृक्षौ । ६

आरूढो वानरो यान् आरूढौ वानरौ यान् आरूढा वानरा यान् ते आरूढवानरा वृक्षाः । ९

इयं नवभङ्गी त्रिषु लिङ्गेषु शेषविभक्तिष्वपि च ज्ञेया ।

**तृतीया**[44] ।

कृतं कार्यं येन स कृतकार्यः । एवं ताडिततूर्यः । हतग्रामः । कृतसंग्रामः ।

**चतुर्थी** ।

दत्ता दक्षिणा यस्मै स दत्तदक्षिणो ब्राह्मणः । एवं रुचितलक्षणः शिष्यगणः ।

**पञ्चमी** ।

पतितानि पत्राणि यस्मात् स पतितपत्रो हरिद्रुः[45] । च्युतनेत्रं मुखम्[46] ।

**षष्ठी** ।

शुक्लः पटो यस्य स शुक्लपटः । एवं निकटपटः । चन्द्रो मौलौ यस्य सः चन्द्रमौलिः । एवं चन्द्रचूडः । गदापाणिः[47] ।

**सप्तमी** ।

मुदिता नागरा यस्मिन् तन्मुदितनागरं नगरम् । एवमुदिततारकं नभः । उषितविहगो[48] नगः । (गतपन्नगो मार्गः)[49] ।

**अनेकं** नाम[50] ।

आरूढा बहवो वानरा यं स आरूढबहुवानरो विष्टरः ।

**तृतीया** ।

पराक्रमेणोपार्जिताः संपदो येन स पराक्रमोपार्जितसंपद्[51] । ध्याननिर्धूतदोषः ।

**एवं चतुर्थी** ।

चौर्यकुपितनृपतिः[52] ।

**पञ्चमी** ।

---

[44] ख - अथ तृतीया

[45] ख - पतितपत्रो जर्णः

[46] ख - वक्त्रम्

[47] ख - चन्द्रचूडः मृडः गदापाणिः शार्ङ्गपाणिः (उष्ट्रमुखादयः)?

[48] क - उदितविहाना नगः

[49] क - नास्ति

[50] ख - तथा अनेकं नाम

[51] ख - पराक्रमोपार्जितसंपत्

[52] क - चौर्यकुपितो नृपतिः

वातपतितपत्रः शिखरी[53] ।

**षष्ठी** ।

कोपारुणेक्षणः । पितृतुल्यरूपः । कृपामंथरतारयोः श्रीवीरनेत्रयोर्भद्रम् ।

**सप्तमी** ।

विततोदिततारकं[54] नभः ।

**तथाऽव्ययः** ।

उच्चैर्मुखं यस्य स उच्चैर्मुखः । नीचैर्मुखः । उपकुम्भः । कर्तुं मनो यस्य स कर्तुमनाः । कर्तुकामः । गंतुमनाः । गंतुकामः । "तुमश्च मनः काम"[55] इति तुमो मकारलुक्[56] । न विद्यते धर्मो यस्य स अधर्मा । एवमपुण्यकः । अनन्तः । अनाश इत्यादि ।

तथा "**उष्ट्रमुखादयः**"[57] शब्दाः कृतमध्यलोपा[58] निपात्यन्ते ।

उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः । एवं वृषस्कन्धः । मृगनेत्रा । मत्तेभगमना । चन्द्रवन्मुखं यस्याः सा चन्द्रमुखी । चन्द्रमुखा । [59]सूर्यनखी । सूर्यनखाऽत्र "नखमुखादन्नाम्नी"ति[60] ङीप्र० वा स्यात् ।

तथा रूढ्या **दिग्वाचि** नाम रूढ्यैव दिग्वाचिना सहान्तरालेऽन्यपदार्थे वाच्ये समस्यते स च बहुव्रीहिः[61] ।

दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा आग्नेयी दिग् । (एवं पूर्वोत्तरा ऐशानी दिग्)[62] । रूढ्येति किम् । ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमित्यत्र समासो न स्यात् ।

तथा **सह** नाम तृतीयान्तनाम्ना समस्यते स च बहुव्रीहिः[63] ।

---

[53] क - पतितपर्णो जर्णः

[54] ख - विततोदिवतारकं

[55] सिद्धहेमशब्दानुशासनम् - तुमश्च मनः कामे (३.२.१४०)

तुम्-समोर्मनसि कामे चोत्तरपदे लुक् स्यात् । भोक्तुमनाः, गन्तुकामः, समनाः, सकामः ॥

[56] ख - मलुक्

[57] सिद्धहेमशब्दानुशासनम् - उष्ट्रमुखादयः (३.१.२३)

एते बहुव्रीहिसमासा निपात्यन्ते । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः, वृषस्कन्धः ॥

[58] ख - कृतमध्यलोपादयो

[59] ख - एवं सूर्यनखी सूर्यनखा

[60] सिद्धहेमशब्दानुशासनम् - नखमुखादनाम्नि (२.४.४०)

सहादिवर्जपूर्वपदाभ्यां स्वाङ्गाभ्यामाभ्याम् असंज्ञायामेव स्त्रियां ङीर्वा स्यात् । शूर्पनखी शूर्पनखा चन्द्रमुखी चन्द्रमुखा । अनाम्नीति किम् ? शूर्पणखा कालमुखा ।

[61] सिद्धहेमशब्दानुशासनम् - दिशो रूढ्याऽन्तराले (३.१.२५)

रूढ्या दिग्वाचि नाम रूढ्यैव दिग्वाचिना सहान्तरालेऽन्यपदार्थे वाच्ये समासो बहुव्रीहिश्च स्यात् । दक्षिणपूर्वा दिक् । रूढ्येति किम् ? ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

[62] ख - नास्ति

[63] सिद्धहेमशब्दानुशासनम् - सहस्तेन (३.१.२४)

सह पुत्रेण वर्तते सपुत्रः सहपुत्रः । "सहस्य सोऽन्यार्थे"[64] इति सहस्य वा सत्वम् । एवं सकर्मकः । साग्निः कपोतः । सद्रोणा खारी ।"अदृश्याधिक्ये"[65] इति नित्यं सत्वम् ।

अधुना बहुव्रीहौ पुंवद्भावाभावौ जिज्ञपयिषुराह[66] ।
**परतः स्त्री स्त्र्येकार्थे[67] पुंवन्नो तद्धिताककोपान्त्याः[68] ।**
**स्वांगङीपूरणाख्या[69] जातिश्चापि प्रियादौ च ॥ ३**

परतो विशेष्यवशात् स्त्रीलिंगं[70] नाम स्त्रीवृत्तावुत्तरपदे[71] एकार्थ्ये पुंवत् स्यात् । न तूङन्तम् । दर्शनीया भार्या यस्य स दर्शनीयभार्यः । एवं सद्भार्यः । युवतिर्भार्या[72] यस्य स युवभार्यः । "परतः स्त्री पुंवत् स्त्र्येकार्थ्येऽनूङ्"[73] इति पूर्वपदे पुंवद्भावः । उत्तरपदे तु "गोश्चान्ते ह्रस्वः"[74] इति ह्रस्वः । परतः स्त्रीति किम् । द्रोणीभार्यः[75] । स्त्र्येकार्थे इति किम् । गृहिणीनेत्रः[76] । कल्याणी माता यस्य सः कल्याणीमाता ।

---

तेनेति तृतीयान्तेन सहोऽन्यपदार्थे समस्यते, स च बहुव्रीहिः । सपुत्र आगतः, सकर्मकः ॥

[64] सिद्धहेमशब्दानुशासनम् - सहस्य सोऽन्यार्थे (३.२.१४३)

उत्तरपदे परे बहुव्रीहौ सहस्य सो वा स्यात् । सपुत्रः सहपुत्रः । अन्यार्थ इति किम् ? सहजः ॥

[65] ख - अत्रादृश्याधिक्ये

सिद्धहेमशब्दानुशासनम् अदृश्याधिके (३.२.१४५)

अदृश्यं परोक्षम्, अधिकम् अधिरूढम्, तदर्थयोरुत्तरपदयोर्बहुव्रीहौ सहस्य सः स्यात् । साग्निः कपोतः, सद्रोणा खारी ॥

[66] ख - बिभणिषुराह

[67] ख - स्त्र्यैकार्थ्ये

[68] क - तद्धिताककोपात्या

[69] क,ख - स्वांगनीपूरणाख्या

[70] क - स्त्रीलिंगनाम

[71] क - स्त्रीवृत्ता उत्तरपद

[72] क - युवति भार्या

[73] सिद्धहेमशब्दानुशासनम् - परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् (३.२.४९)

परतः विशेष्यवशात् स्त्रीलिङ्गः स्त्रीवृत्तावेकार्थे उत्तरपदे पुंवत् स्यात् । न तूङन्तः । दर्शनीयभार्यः । परत इति किम् ? द्रोणीभार्यः । स्त्रीति किम् ? खलपुदृष्टिः । स्त्र्येकार्थ इति किम् ? गृहिणीनेत्रः, कल्याणीमाता । अनूङिति किम् ? करभोरूभार्यः ॥

[74] सिद्धहेमशब्दानुशासनम् - गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ (२.४.९६)

गौणस्याक्विपौ गोर्ङ्याद्यन्तस्य चान्ते वर्तमानस्य ह्रस्वः स्यात्, न चेदसावंशिसमासान्त ईयस्वन्तबहुव्रीह्यन्तो वा । चित्रगुः, निष्कौशाम्बिः, अतिखट्वः, अतिब्रह्मबन्धुः । गौणस्येत्येव - सुगौः, राजकुमारी । अक्विप इत्येव - प्रियगौः प्रियकुमारी चैत्रः । गोश्चेति किम्? अतितन्त्रीः । अन्त इति किम् ? गोकुलम्, कन्यापुरम् । अंशिसमासादिवर्जनं किम् ? अर्द्धपिप्पली, बहुश्रेयसी ना ॥

[75] क - द्रोणीभार्याः

[76] क, ख - गृहिणीनेत्राः

समासान्तविधेरनित्यत्वादत्र न कच्[77] । अनूङिति किम् । करभस्येव उरू यस्याः सा करभोरूः । "उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः"[78] इति ऊङ् प्र० (ततश्च)[79] करभोरूर्भार्या यस्य करभोरूभार्यः[80] । एवं रम्भोरूभार्यः । सहितोरूप्रियः ।
तथा तद्धितस्याऽकप्रत्ययस्य च क-उपान्त्ये यासां[81] "तास्तद्धिताककोपान्त्याः"[82] परतः स्त्रियः पुंवन्न स्युः[83] । तथा हि । मद्रेषु भवा मद्रिका । "वृजिमद्राद्देशात्कः"[84] इति कप्र० । "अस्यायत्तत्क्षिपकादीनामि"ति[85] द्रस्येभावः । ततो मद्रिका भार्या यस्य स मद्रिकाभार्यः । अक । कृधातुः करोतीति कारिका "णकतृचौ"[86] णकप्र० । "नामिनोऽकलिहलेः"[87] । "वृद्धिरार्"[88] । ("अस्याय०" [89] अस्येत्वं "आत्" [90] इत्याप्प्र०

---

[77] सिद्धहेमशब्दानुशासनम् - ऋन्नित्यदितः (७.३.१७१) - इत्यस्य समासान्तविधेरनित्यत्वात् ।
ऋदन्तात्, नित्यं दिदादेशो यस्मात् तदन्ताच्च बहुव्रीहेः कच् स्यात् । बहुकर्तृकः, बहुनदीको देशः । नित्येति किम् ? पृथुश्रीः ॥

[78] सिद्धहेमशब्दानुशासनम् - उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः (२.४.७५)
एतत्पूर्वपदादूरोः स्त्रियां ऊङ् स्यात् । करभोरूः, सहितोरूः, संहितोरूः, सहोरूः, शफोरूः, वामोरूः, लक्ष्मणोरूः । उपमानाद्यादेरिति किम्? पीनोरुः ॥

[79] ख - नास्ति

[80] ख - करभोरूभार्याः

[81] ख - यस्यां

[82] सिद्धहेमशब्दनुशासनम् - तद्धिताककोपान्त्यपूरणाख्याः (३.२.५४)
तद्धितस्याकप्रत्ययस्य च क उपान्त्यो यासां ताः, पूरणप्रत्ययान्ताः, संज्ञाश्च परतः स्त्रियः पुंवन्न स्युः । मद्रिकाभार्यः, कारिकाभार्यः, पञ्चमीभार्यः, दत्ताभार्यः । तद्धिताकेति किम् ? पाकभार्यः ॥

[83] ख - स्यात्

[84] सिद्धहेमशब्दानुशासनम् - वृजिमद्राद्देशात्कः (६.३.३८)
वृजिमद्रशब्दाभ्यां देशवाचिभ्यां शेषेऽर्थे कः स्यात् । वृजिकः, मद्रकः ॥

[85] सिद्धहेमशब्दानुशासनम् - अस्यायत्तत्क्षिपकादीनाम् (२.४.१११)
यदादिवर्जस्याऽतोऽनित्क्याप्परे इः स्यात् । पाचिका, मद्रिका । अनित्कीत्येव - जीविका । आप्पर इत्येव - बहुपारिव्राजका । यदादिवर्जनं किम् ? यका, सका, क्षिपका, ध्रुवका ॥

[86] सिद्धहेमशब्दानुशासनम् - णकतृचौ (५.१.४८)
धातोरेतौ स्याताम् । पाचकः, पक्ता ॥

[87] सिद्धहेमशब्दानुशासनम् - नामिनोऽकलिहलेः (४.३.५१)
नाम्यन्तस्य धातोर्नाम्नो वा कलिहलिवर्जस्य ञ्णिति वृद्धिः स्यात् । अचायि, कारकः, अपीपटत् । कलिहलिवर्जनं किम् ? अचकलत्, अजहलत् ॥

[88] सिद्धहेमशब्दानुशासनम् - वृद्धिराऽऽरैदौत् (३.३.१)
आ आर् ऐ औ, एते प्रत्येकं वृद्धिः स्युः । मार्ष्टि, कार्यम्, नायकः, औपगवः ॥

[89] सिद्धहेमशब्दानुशासनम् अस्यायत्तत्क्षिपकादीनाम् (२.४.१११)
यदादिवर्जस्याऽतोऽनित्क्याप्परे इः स्यात् । पाचिका, मद्रिका । अनित्कीत्येव - जीवका । आप्पर इत्येव - बहुपरिव्राजका । यदादिवर्जनं किम् ? यका, सका, क्षिपका, ध्रुवका ॥

[90] सिद्धहेमशब्दानुशासनम् - आत् (२.४.१८)
अकारान्तात् स्त्रियाम् आप् स्यात् । खट्वा, या, सा ॥

ततश्च)[91] । कारिका भार्या यस्य स कारिकाभार्यः । एवं पाचिकाप्रियः । दायिकादयितः । तथा स्वांगवाचिनो[92] यो ङीप्रत्ययस्तदन्ताः पूरणप्रत्ययान्ताः संज्ञाश्च परतः स्त्री पुंवन्न स्युः[93] । तथा हि । दीर्घाः केशा यस्याः सा दीर्घकेशी । "असहनञ् विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः"[94] इति (वा ङीप्र०)[95] | ततो दीर्घकेशी भार्या यस्य स दीर्घकेशीभार्यः । एवं तुङ्गनासिकीभार्यः । कृशोदरीरमणीकः । बिम्बोष्ठीकान्तः[96] । दीर्घजङ्घीवधूकः । "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठादि"ति[97] ङीप्र० । सूर्यनखीभार्यः । चन्द्रमुखीभार्यः । अत्र "नखमुखादनाम्नि"[98] इति (ङीप्र०)[99] । पंचानां पूरणी पंचमी । "नो मट्"[100] इति मट्प्र० टित्त्वा"च्चाणञे०"[101] ङीप्र० । "अस्य ङ्यां लुक्

---

[91] ख - "आत्" इत्याप्प्र० "अस्याय०" इत्वम् ।

[92] ख - स्वांगवाचिनौ

[93] सिद्धहेमशब्दानुशासनम् - स्वाङ्गान्ङीर्जातिश्चामानिनि (३.२.५६)

स्वाङ्गाद् यो ङीस्तदन्तो जातिवाची च परतः स्त्री पुंवन्न स्यात् । न तु मानिनि । दीर्घकेशीभार्यः, कठीभार्यः, शूद्राभार्यः । स्वाङ्गादिति किम् ? पटुभार्यः । अमानिनीति किम् ? दीर्घकेशमानिनी ॥

सिद्धहेमशब्दानुशासनम् - तद्धिताककोपान्त्यपूरणाख्याः (३.२.५४)

तद्धितस्याकप्रत्ययस्य च क उपान्त्यो यासां ताः, पूरणप्रत्ययान्ताः, संज्ञाश्च परतः स्त्रियः पुंवन्न स्युः । मद्रिकाभार्यः, कारिकाभार्यः, पञ्चमीभार्यः, दत्ताभार्यः । तद्धिताकेति किम् ? पाकभार्यः ॥

[94] सिद्धहेमशब्दानुशासनम् - असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः (२.४.३८)

सहादिवर्जपूर्वपदं यत् स्वाङ्गं तदन्तात् क्रोडादिवर्जाददन्तात् स्त्रियां ङीर्वा स्यात् । पीनस्तनी, पीनस्तना; अतिकेशी, अतिकेशा माला । सहादिवर्जनं किम् ? सहकेशा, अकेशा, विद्यमानकेशा । क्रोडादिवर्जनं किम् ? कल्याणक्रोडा, पीनगुदा, दीर्घवाला । स्वाङ्गादिति किम् ? बहुशोफा, बहुज्ञाना, बहुयवा ॥

[95] ख - ङीप्र० वा

[96] क - बिम्बोष्ठीकान्ताः

[97] सिद्धहेमशब्दानुशासनम् - नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् (२.४.३९)

सहादिवर्जपूर्वपदेभ्यः एभ्यः स्वाङ्गेभ्यः स्त्रियां ङीर्वा स्यात् । तुङ्गनासिकी, तुङ्गनासिका; कृशोदरी, कृशोदरा; बिम्बोष्ठी, बिम्बोष्ठा; दीर्घजङ्घी, दीर्घजङ्घा; समदन्ती, समदन्ता; चारुकर्णी, चारुकर्णा; तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा; मृद्वङ्गी, मृद्वङ्गा; सुगात्री, सुगात्रा; सुकण्ठी, सुकण्ठा । पूर्वेण सिद्धे नियमार्थमिदम्, तेन बहुस्वरसंयोगोपान्तेभ्योऽन्येभ्यो मा भूत् , सुललाटा, सुपार्श्वा ॥

[98] सिद्धहेमशब्दानुशासनम् - नखमुखादनाम्नि (२.४.४०)

सहादिवर्जपूर्वपदाभ्यां स्वाङ्गाभ्यामाभ्याम् असंज्ञायामेव स्त्रियां ङीर्वा स्यात् ।

[99] ख - वा ङीप्र०

[100] सिद्धहेमशब्दानुशासनम् - नो मट् (७.१.१५९)

असंख्यादेर्नान्तायाः संख्यायाः संख्यापूरणे मट् स्यात् । पंचमी । असंख्यादेरित्येव - द्वादशः ॥

[101] ख - टित्त्वात् अणञे०टितां

सिद्धहेमशब्दानुशासनम् - अणञेयेकण्-नञ्-स्नञ्-टिताम् (२.४.२०)

अणादीनां योऽत् तदन्तात्तेषामेव स्त्रियां ङीः स्यात् । औपगवी, बैदी, सौपर्णेयी, आक्षिकी, स्त्रैणी, पौंस्नी, जानुदघ्नी ॥

"[102] अकारलुक् । ततश्च पञ्चमी भार्या यस्य स पंचमीभार्यः । आख्या । दत्ताभार्यः । देवकीभार्यः ।
तथा जातिवाचि नाम परतः स्त्री पुंवन्न स्यात् । कठीभार्यः । शूद्राभार्यः । क्षत्रियाभार्यः । ब्राह्मणीरमणीकः । तथाऽप्प्रत्ययान्ते प्रियादौ चोत्तरपदे पुंवन्नो स्यात् ।[103] तथा हि । कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः । "पूरणीभ्यस्तत्प्राधान्येऽप्"[104] इति अप्प्र० । अवर्णे वर्णस्य ईलोपः । "आत्"[105] आप् प्रत्ययः । प्रियादि । कल्याणीभक्तिरित्यादि । तथा । रक्तविकाराभ्यामन्यस्य स्वरवृद्धिहेतोस्तद्धितान्तनाम्नः पुंवद्भावो न स्यात्[106] । मथुरायां भवा माथुरी "भवेऽण्"[107] "वृद्धिः स्वरेष्वादेञ्णिति"[108] । वृद्धिः (मस्य मा)[109] । अणञे०[110] ङीप्र० । माथुरी भार्या यस्य स माथुरीभार्यः । एवं मैथिलिमहिलः । (स्वरेति किम्?)[111] व्याकरणं वेत्त्यधीते वा वैयाकरणः "तद्वेत्त्यधीतेऽण्"[112] । "य्वो पदान्तात्प्रागैदौत्"[113] इति वकाराग्रे[114] ऐत् । वैयाकरणी भार्या यस्य स

---

[102] सिद्धहेमशब्दानुशासनम् - अस्य ङ्यां लुक् (२.४.८६)
ङ्यां परेऽतो लुक् स्यात् । मद्रचरी ॥

[103] सिद्धहेमशब्दानुशासनम् - नाप्प्रियादौ (३.२.५२)
अप्प्रत्ययान्ते स्त्र्येकार्थे उत्तरपदे प्रियादौ च परतः स्त्री पुंवन्न स्यात् । कल्याणीपञ्चमा रात्रयः, कल्याणीप्रियः । अप्प्रियादाविति किम् ? कल्याणपञ्चमीकः पक्षः ॥

[104] सिद्धहेमशब्दानुशासनम् - पूरणीभ्यस्तत्प्राधान्येऽप् (७.३.१३०)
पूरणप्रत्ययान्ता या स्त्री, तदन्ताद् बहुव्रीहेरप् स्यात्, पूरण्याः प्राधान्ये समासार्थत्वे सति । कल्याणीपञ्चमा रात्रयः । तत्प्राधान्य इति किम् ? कल्याणपञ्चमीकः पक्षः ॥

[105] सिद्धहेमशब्दानुशासनम् - आत् (२.४.१८)
अकारान्तात् स्त्रियाम् आप् स्यात् । खट्वा, या, सा ॥

[106] सिद्धहेमशब्दानुशासनम् - तद्धितः स्वरवृद्धिहेतुररक्तविकारे (३.२.५५)
रक्तविकाराभ्यामन्यार्थे स्वरवृद्धिहेतुर्यस्तद्धितस्तदन्तः परतः स्त्री पुंवन्न स्यात् । माथुरीभार्यः । स्वरेति किम्? वैयाकरणभार्यः । वृद्धिहेतुरिति किम् ? अर्धप्रस्थभार्यः । अरक्तविकार इति किम् ? काषायबृहतिकः, लौहेषः ॥

[107] सिद्धहेमशब्दानुशासनम् - भवे (६.३.१२३)
सप्तम्यन्ताद् भवेऽर्थे यथाविहितमणेयणादयः स्युः । स्रोघ्नः, औत्सः, नादेयः, ग्राम्यः ॥

[108] सिद्धहेमशब्दानुशासनम् - वृद्धिः स्वरेष्वादेञ्णिति तद्धिते (७.४.१)
ञिति णिति च तद्धिते परे प्रकृतेः स्वराणां मध्ये आद्यस्वरस्य वृद्धिः स्यात् । दाक्षिः, भार्गवः । तद्धित इति किम् ? चिकीर्षकः ॥

[109] क - नास्ति

[110] सिद्धहेमशब्दानुशासनम् - अणञेयेकण्-नञ्-स्नञ्-टिताम् (२.४.२०)
अणादीनां योऽत् तदन्तात्तेषामेव स्त्रियां ङीः स्यात् । औपगवी, बैदी, सौपर्णेयी, आक्षिकी, स्त्रैणी, पौंस्नी, जानुदघ्नी ॥

[111] क - नास्ति

[112] सिद्धहेमशब्दानुशासनम् - तद्वेत्त्यधीते (६.२.११७)
तदिति द्वितीयान्ताद् वेत्ति अधीते वा इत्यर्थयोर्यथाविहितं प्रत्ययः स्यात् । मौहूर्त्तः, छान्दसः॥

[113] सिद्धहेमशब्दानुशासनम् - य्वः पदान्तात् प्रागैदौत् (७.४.५)

वैयाकरणभार्यः । (अत्र स्वरवृद्ध्यभावात्पुंवत् स्यादेव)[115] । कषायेण रक्ता काषायी । "रागाट्टो रक्ते"[116] इत्यण्[117] । काषायी बृहतिका यस्य स काषायबृहतिकः । लोहस्य विकारो लौही "विकारेऽण्"[118] । लौही ईषा यस्य स लौहेषः । (अत्र विकारार्थत्वात् पुंवत् स्यात् । इत्यादि सूत्रेभ्यो ज्ञेयम्)[119] ॥

**ङीडापौ वाऽन्नन्तादुपान्त्यवतोऽनो मनश्च नो ङी स्यात् ।**
**ऋन्नित्यदितो नित्यं शेषाद्वा कच् बहुव्रीहौ ॥ ४**

अन्नताद् बहुव्रीहेर्ङीडापौ स्त्रियां वा स्याताम् । बहवो राजानो ययोस्ते बहुराज्ञौ बहुराजे बहुराजानौ नगर्यौ । अत्र "अनो वा"[120] इति वा ङीप्र० । "ताभ्यां वाऽप् डित्"[121] इति डाप् च प्रत्ययो वा स्यात् । एवं सुसीम्न्यौ[122] सुसीमे[123] सुसीमानौ । चारुनाम्न्यौ चारुनामे चारुनामानौ स्त्रियौ । यत्रोपान्त्याकारस्य लुक् न स्यात् स उपान्त्यवान् । तस्मादन्नन्तात् स्त्रियां ङीर्न स्यात्[124] । डाप् तु वा स्यादेव । सुपर्वे सुपर्वाणौ । सुकर्मे

---

ञ्णिति तद्धिते इवर्णोवर्णयोर्वृद्धिप्राप्तौ तयोरेव स्थाने यौ य्वौ पदान्तौ, ताभ्यां प्राक् यथासङ्ख्यमैदौतौ स्याताम् । नैयायिकः सौवश्वः । पदान्तादिति किम्? यत इमे याता ॥

[114] ख - वस्याग्रे

[115] ख - नास्ति

[116] सिद्धहेमशब्दानुशासनम् - रागाट्टो रक्ते (६.२.१)
रज्यते येन कुसुम्भादिना तदर्थात् तृतीयान्ताद् रक्तमित्यर्थे यथाविहितः प्रत्ययः स्यात् । कौसुम्भं वासः ॥

[117] ख - रागाट्टो रक्तेऽण् प्र०

[118] ख - विकारेऽण् प्र०
सिद्धहेमशब्दानुशासनम् - विकारे (६.२.३०)
षष्ठ्यन्ताद् विकारे यथाविहितं प्रत्ययाः स्युः । आश्मनः, आश्मः ॥

[119] ख - अत्र रक्तविकारार्थत्वात् पुंवद्भावः

[120] सिद्धहेमशब्दानुशासनम् - अनो वा (२.४.११)
अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीर्वा स्यात् । बहुराज्ञौ, बहुराजे, बहुराजानौ ॥

[121] सिद्धहेमशब्दानुशासनम् - ताभ्यां वाऽप् डित् (२.४.१५)
मन्नन्ताद् बहुव्रीहेश्चान्नन्तात् स्त्रियाम् आप् वा स्यात्, स च डित् । सीमे, सुपर्वे । पक्षे - सीमानौ, सुपर्वाणौ ॥

[122] ख - सुसीम्नौ

[123] क - सुसीमा

[124] सिद्धहेमशब्दानुशासनम् - नोपान्त्यवतः (२.४.१३)
यस्योपान्त्यलुग् नास्ति तस्मादन्नन्ताद् बहुव्रीहेः स्त्रियां ङीर्न स्यात् । सुपर्वा, सुशर्मा । उपान्त्यवत इति किम् ? बहुराज्ञी ॥

सुकर्माणौ रमण्यौ । “न वमन्तसंयोगादि”ति[125] अकारस्य न लुक् । तथा समासमंतरेण मन्नन्तनाम्नः स्त्रियां ङीर्न स्यात् । डाप् तु वा स्यादेव । सीमे सीमानौ । “स्त्रियां नृतोऽस्वस्रादिर्ङीः”[126] इति प्राप्तस्य ङीप्रत्ययस्य “मनः”[127] इत्यनेन निषेधः । समासे तु ङीरपि स्यादेव । तथा ॠदन्तेभ्यो नित्यम् । दैदास्दास्दामादेशा [128] येभ्यस्ते नित्यदितः तेभ्यश्च[129] नित्यम् । शेषनामभ्यस्तु वा बहुव्रीहौ कच् समासान्तः वा स्यात् । तथा हि । ॠदन्तः[130] । प्रियो भर्ता यस्याः सा प्रियभर्तृका कामिनी । एवं प्रियपितृकः । प्रियमातृकः । पृथुकः । नित्यदित्[131] । वरनदीको ग्रामः । वरवधूको[132] युवा । “शेषनाम्नो वा”[133] । सकर्मकः सकर्मा[134] । निर्विशेषमनस्कः निर्विशेषमनाः । दृढधर्मको दृढधर्मा । (बहुसेनाको बहुसेनको बहुसेनो)[135] नरेन्द्रः[136] । अत्र “न वाऽऽपः”[137] इति कचि वा ह्रस्वः । (बहुबुद्धिको)[138] बहुबुद्धिः । सश्रीकः सश्रीः । प्रियमधुकः[139] प्रियमधुः ।

---

[125] सिद्धहेमशब्दानुशासनम् - न वमन्तसंयोगात् (२.१.१११)
वान्तान्मान्ताच्च संयोगात्परस्याऽनोऽस्य लुग् न स्यात् । औक्ष्णः, ताक्ष्णः, भ्रौणघ्नः, धार्तराज्ञः॥

[126] सिद्धहेमशब्दानुशासनम् - स्त्रियां नृतोऽस्वस्रादेर्ङीः (२.४.१)
स्त्रीवृत्तेर्नान्ताद् ॠदन्ताच्च स्वस्रादिवर्जाद् ङीः स्यात् । राज्ञी, अतिराज्ञी, कर्त्री । स्त्रियामिति किम् ? पञ्च नद्यः । अस्वस्रादेरिति किम्? स्वसा, दुहिता ॥

[127] सिद्धहेमशब्दानुशासनम् - मनः (२.४.१४)
मन्नन्ताद् स्त्रियां ङीर्न स्यात् । सीमानौ ॥

[128] क - दैदास्दामादेशा

[129] क - तेभ्य

[130] सिद्धहेमशब्दानुशासनम् - ॠन्नित्यदितः (७.३.१७१)
ॠदन्तात्, नित्यं दिदादेशो यस्मात् तदन्ताच्च बहुव्रीहेः कच् स्यात् । बहुकर्तृकः, बहुनदीको देशः । नित्येति किम् ? पृथुश्रीः ॥

[131] सिद्धहेमशब्दानुशासनम् - ॠन्नित्यदितः (७.३.१७१)
ॠदन्तात्, नित्यं दिदादेशो यस्मात् तदन्ताच्च बहुव्रीहेः कच् स्यात् । बहुकर्तृकः, बहुनदीको देशः । नित्येति किम् ? पृथुश्रीः ॥

[132] क - प्रियवधूकौ

[133] सिद्धहेमशब्दानुशासनम् - शेषाद् वा (७.३.१७५)
उपर्युक्तातिरिक्ताद् बहुव्रीहेः कच् वा स्यात् । बहुखट्वकः, बहुखट्वः । शेषादिति किम् ? प्रियपथः ॥

[134] क - नास्ति

[135] ख - बहुसेनको बहुसेनको बहुसेनो

[136] ख - राजा

[137] सिद्धहेमशब्दानुशासनम् - न वाऽऽपः (२.४.१०६)
आपः कचि परे ह्रस्वो वा स्यात् । प्रियखट्वकः, प्रियखट्वाकः ॥

[138] ख - नास्ति

[139] क - नास्ति

वक्रभ्रूको वक्रभ्रूः । विगतः इः कामो यस्मात्स विगतेकः विगतेः[140] । रुचिररैको रुचिरराः । (विमलद्योको विमलद्यौः)[141] दिवसः । दृढनौको दृढनौः । इत्यादि ।
इति बहुव्रीहिसमासः ॥ ४

अथ द्वन्द्वस्य लक्षणभेदलिंगवचनान्याह ।
**चकारबहुलो द्वन्द्वः स च द्विधेतरेतरः समाहारः ।**
**आद्यः स्वलिङ्गवचनोऽन्यः क्लीबश्चैकवचनान्तः ॥ ५**

सुगमम् ।
अत्र पूर्वार्धे न लक्षणभेदौ । उत्तरार्धे न तु लिङ्गवचने उवाच[142] । ब्राह्मणश्च क्षत्रियश्च विट् च शूद्रश्च ब्राह्मणक्षत्रियविट्शूद्राः । ब्राह्मणक्षत्रियविट्शूद्रम्[143] ॥

**नित्यवैरिभृतां नानालिङ्गनीवृन्नदीपुराम्**[144] **।**
**प्राणितूर्यांगसेनांगाऽल्पांगिनां स्यात् समाहृतः ॥ ६**
नित्यं जातिनिबद्धं वैरं येषां तेषामहिनकुलादीनां तथा पृथग्लिङ्गदेशनदीनगराणाम् । तथा प्राण्यंगतूर्यांगसेनांगक्षूद्रजन्तूनाम् स्वैर्द्वन्व एकार्थ एव स्यात् ।
**नित्यवैरि**[145] । अहिश्च नकुलश्चाहिनकुलम् । एवमश्वमहिषम् । नित्यवैरस्येति[146] किम् । देवासुराः । देवासुरम् । **विलिङ्गदेश** । कुरुकुरुक्षेत्रम् । **नदी** । गंगाशोणम् । **पुर** । मथुरापाटलिपुत्रम् । गजपुरायोध्यम् । विलिङ्गानामिति[147] किम् । गंगायमुने । **प्राण्यंग**[148] । कर्णनासिकम् । हस्तपादम् । शिरोग्रीवम्[149] । नखदन्तम् । **तूर्याङ्ग** ।

---

[140] क - विगतः
[141] ख - मलिनद्योकः मलिनद्यौः
[142] ख - लिंगमुवाच
[143] ख - ब्राह्मणक्षत्रियविट्शूद्रकम्
[144] ख - नानालिङ्गनीवृन्नदीपुरम्
[145] सिद्धहेमशब्दानुशासनम् - नित्यवैरस्य (३.१.१४१)
नित्यं जातिनिबद्धं वैरं येषां तेषां स्वैर्द्वन्द्व इकार्थः स्यात् । अहिनकुलम् । नित्यवैरस्येति किम् ? देवासुराः, देवासुरम् ॥
[146] क, ख - नित्यवैरेति
[147] सिद्धहेमशब्दानुशासनम् - नदीदेशपुरां विलिङ्गानाम् (३.१.१४२)
एषां विविधलिङ्गानां स्वैर्द्वन्द्व एकार्थः स्यात् । गङ्गाशोणम्, कुरुकुरुक्षेत्रम्, मथुरापाटलिपुत्रम् । विलिङ्गानामिति किम् ? गङ्गायमुने ॥
[148] सिद्धहेमशब्दानुशासनम् - प्राणितूर्याङ्गाणाम् (३.१.१३७)
प्राणितूर्ययोरङ्गार्थानां स्वैर्द्वन्द्व एकार्थः स्यात् । कर्णनासिकम्, मार्दङ्गिकपाणविकम् । स्वैरित्येव - पाणिगृध्रौ ॥
[149] ख - हस्तपादशिरोग्रीवम्

शङ्खपटहम् मार्दंगिकपाणविकम्[150] । **सेनांग**[151] । अश्वरथम् । हस्त्यश्वम् । **क्षुद्रजन्तु** । यूकालिक्षम्[152] । दंशमशकम् । तथा "पात्रार्हशूद्राणां"[153] स्वैर्द्वन्द्व एकार्थः स्यात् । तक्षायस्कारम् । पात्रार्ह इति किम् । जनङ्गमबुक्कसाः[154] । (इत्याद्यनुक्तमप्यूह्यम्)[155] ।

**चबहुत्वे तरुतृणमृगधान्यपतत्त्रिणाम् ।**
**पशुव्यञ्जनशब्दानामद्रव्याणां विरोधिनाम् ॥ ७**

व्याख्या ।

बह्वर्थादीनां तर्वादीनां[156] तथा पशूनां[157] व्यञ्जनानां च विरोधिनामद्रव्यवाचिनां च स्वैर्द्वन्द्वः समाहारो वा स्यात् ।

**तरु** । प्लक्षाश्च न्यग्रोधाश्च प्लक्षन्यग्रोधाः । एवमाम्रजंबीराः । केतकचम्पकं केतकचम्पकाः । **तृण** । कुशकाशाः । **धान्य** । तिलमाषं तिलमाषाः । **मृग** । ऋश्यैणम् ऋश्यैणाः । **पक्षि** । हंसचक्रवाकं हंसचक्रवाकाः । **पशु** । गोश्च महिषश्च गोमहिषौ गोमहिषम् । गवाश्वम् । गवाविकम् । इत्यादौ तु "गवाश्वादि"रित्येकार्थ[158] एव । **व्यञ्जनं** । दधिघृतं दधिघृते । दधिपयसी मधुसर्पिषी । अत्र "न दधिपयआदिः"[159] इति नैकार्थः । **अद्रव्यम्**[160] । लाभालाभं लाभालाभौ । सुखदुःखं सुखदुःखे ।

---

[150] ख - मार्दंगकपाणिविकम्

[151] सिद्धहेमशब्दानुशासनम् - सेनाङ्गक्षुद्राजन्तूनाम् (३.१.१३४)
सेनाङ्गानां क्षुद्रजन्तूनां च बह्वर्थानां स्वैर्द्वन्द्व एकार्थो नित्यं स्यात् । अश्वरथम्, यूकालिक्षम् ॥

[152] ख - यूकालक्षं

[153] सिद्धहेमशब्दानुशासनम् - पात्र्यशूद्रस्य (३.१.१४३)
पात्रार्हशूद्रवाचिनां स्वैर्द्वन्द्व एकार्थः स्यात् । तक्षायस्कारम् । पात्र्येति किम्? जनङ्गमबुक्कसाः॥

[154] क - जनंबुक्कसाः

[155] क - इति श्लोकाबद्धमपि ज्ञेयम्

[156] सिद्धहेमशब्दानुशासनम् - तरुतृणधान्यमृगपक्षिणां बहुत्वे (३.१.१३३)
एतद्वाचिनां बह्वर्थानां प्रत्येकं स्वैर्द्वन्द्व एकार्थो वा स्यात् । प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः; कुशकाशम्, कुशकाशाः; तिलमाषम्, तिलमाषाः; ऋश्यैणम्, ऋश्यैणाः; हंसचक्रवाकम्, हंसचक्रवाकाः ॥

[157] सिद्धहेमशब्दानुशासनम् - पशुव्यञ्जनानाम् (३.१.१३२)
पशूनां व्यञ्जनानां च स्वैर्द्वन्द्व एकार्थो वा स्यात् । गोमहिषम्, गोमहिषौ; दधिघृतम्, दधिघृते ॥

[158] सिद्धहेमशब्दानुशासनम् - गवाश्वादिः (३.१.१४४)
अयं द्वन्द्वः एकार्थः स्यात् । गवाश्वम्, गवाविकम् ॥

[159] सिद्धहेमशब्दानुशासनम् - न दधिपयआदिः (३.१.१४५)
दधिपयआद्यो द्वन्द्व एकार्थो न स्यात् । दधिपयसी, सर्पिर्मधुनी ॥

[160] सिद्धहेमशब्दानुशासनम् - विरोधिनामद्रव्याणां न वा द्वन्द्वः स्वैः (३.१.१३०)

विरोधिनामिति किम् । कामक्रोधौ । अद्रव्याणामिति किम् । शीतोष्णे जले । स्वैरिति किम् । बुद्धिसुखदुःखानि । तथाऽश्ववडवम् अश्ववडवौ[161] । सूत्रनिर्देशादेव ह्रस्वः पुंवत्त्वं च । पूर्वापरं पूर्वापरे । (अधरोत्तरं)[162] अधरोत्तरे । इत्येष्वपि विकल्पो ज्ञेयः । तथा भ्राता च स्वसा च भ्रातारौ । पुत्रश्च दुहिता च पुत्रौ । "भ्रातृपुत्राः स्वसृदुहितृभिरि"त्युत्तरपदलोपः[163] । पिता च माता च पितरौ मातापितरौ मातरपितरौ क्रमेण "पिता मात्रा वा"[164] "आ द्वन्द्वे"[165] "मातरपितरं वे"ति[166] सूत्रैर्निष्पत्तिः । श्वशुरश्च श्वश्रूश्च श्वशुरौ श्वश्रूश्वशुरौ[167] । अत्र चोत्तरपदलोपः । तथा ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । एवं क्षत्रियौ | शूद्रौ | मानुषौ | देवौ । अत्र "पुरुषः स्त्रिया"[168] इति पुरुषशेषः इत्यादि श्लोकानुक्तमपि[169] सूत्रेभ्यो अवगन्तव्यम् । इति[170] द्वन्द्वसमासः ॥

**संख्यावाचि नाम तद्धितविषये उत्तरपदे च परे समाहारे चार्थे ।**
**यत्र परेण नाम्ना समस्यते स द्विगुः स्यात् ।**

---

द्रव्यं गुणाद्याश्रयः, विरोधवाचिनाम् अतदाश्रयवृत्तीनां द्वन्द्वो वैकार्थः स्यात् । स्वैः सजातीयैरेवारब्धश्चेत् । सुखदुःखम्, सुखदुःखे; लाभालाभम्, लाभालाभौ । विरोधिनामिति किम् ? कामक्रोधौ । अद्रव्याणामिति किम् ? शीतोष्णे जले । स्वैरिति किम् ? बुद्धिः सुखदुःखानि ॥

[161] सिद्धहेमशब्दानुशासनम् - अश्ववडवपूर्वापराधरोत्तराः (३.१.१३१)
एते त्रयो द्वन्द्वा एकार्था वा स्युः, स्वैश्चेत् । अश्ववडवम्, अश्ववडवौ; पूर्वापरम्, पूर्वापरे; अधरोत्तरम्, अधरोत्तरे ॥

[162] क - नास्ति

[163] सिद्धहेमशब्दानुशासनम् - भ्रातृपुत्राः स्वसृदुहितृभिः (३.१.१२१)
स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः, दुहित्रर्थेन च पुत्रार्थः एकः शिष्यते । भ्राता च स्वसा च भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ ॥

[164] सिद्धहेमशब्दानुशासनम् - पिता मात्रा वा (३.१.१२२)
मातृशब्देन सहोक्तौ पितृशब्दः एकः शिष्यते वा । पिता च माता च पितरौ, मातापितरौ ॥

[165] सिद्धहेमशब्दानुशासनम् - आ द्वन्द्वे (३.२.३९)
विद्यायोनिसम्बन्धनिमित्तानाम् ऋदन्तानां षष्ठ्याः स्वसृपत्योरुत्तरपदयोर्योनिसम्बन्धनिमित्तयोर्लुब् वा न स्यात् । होतुःस्वसा, होतृस्वसा, स्वसुःपतिः, स्वसृपतिः । विद्यायोनिसम्बन्ध इत्येव - भर्तृस्वसा, होतृपतिः ॥

[166] सिद्धहेमशब्दानुशासनम् - मातरपितरं वा (३.२.४७)
मातृपित्रोः पूर्वोत्तरपदयोर्द्वन्द्वे ऋतोऽरो वा निपात्यते । मातरपितरयोः, मातापित्रोः ॥

[167] सिद्धहेमशब्दानुशासनम् - श्वशुरः श्वश्रूभ्यां वा (३.१.१२३)
श्वश्रूशब्देन सहोक्तौ श्वशुर एको वा शिष्यते । श्वशुरौ, श्वश्रूश्वशुरौ ॥

[168] सिद्धहेमशब्दानुशासनम् - पुरुषः स्त्रिया (३.१.१२६)
पुरुषशब्दः प्राणिनि पुंसि रूढः, स्त्रीवाचिना सहोक्तौ पुरुष एकः शिष्यते स्त्रीपुरुषमात्रभेदश्चेत् । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । पुरुष इति किम्? तीरं नदनदीपतेः । तन्मात्रभेदः इत्येव - पुंस्त्रियौ ॥

[169] क - श्लोकाबद्धमपि

[170] क - ज्ञेयमिति

**तत्र तत्पुरुषकर्मधारयावपि स्याताम् ॥**[171] **८(१)**

तथा हि । द्वयोर्मात्रोरपत्यं द्वैमातुरः । "संख्यासंभद्रान्मातुर्मातुश्चे"ति[172] अण् । मातुर् आदेशश्च । अध्यर्धेन कंसेन क्रीतोऽध्यर्धकंसः । "मूल्यैः क्रीते"[173] इकण् प्र० । "अनाम्न्यद्विः प्लुप्"[174] लोपः । "कसमासेऽध्यर्धः"[175] इति संख्यात्वम् । (उत्तरपदे)[176] । पञ्चगावो धनमस्य स पञ्चगवधनः । "गोस्तत्पुरुषादि"त्यट्[177] स० समाहारे । पञ्चानां मञ्चानां समाहारः पञ्चमञ्ची ॥

सांप्रतं समाहारद्विगौ लिङ्गविशेषमाह ।
**पात्रादिवर्जितोऽदन्तोत्तरपदः**[178] **समाहारे द्विगुरन्नाबंतांतो वान्यस्तु सर्वे नपुंसकः ॥ ८(२)**

पात्रादिशब्दवर्जः समाहारे वर्तमानोऽदन्तो द्विगुर्नित्यं स्त्रीलिंगस्तथा अन्नंत आबन्तश्च स्त्रियां वा स्यात् ।  तथाऽदंताऽनंताबन्तवर्जोऽन्यः सर्वोऽपि क्लीबः स्यात् । तथा हि । पंचानां पूलानां समाहारः पंचपूली । एवं पंचशैली[179] । चतुष्कषायी[180] । त्रिनयनी । अत्र

---

[171] सिद्धहेमशब्दानुशासनम् - संख्या समाहारे च द्विगुश्चानान्म्ययम् (३.१.९९)
संख्यावाचि परेण नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात्, संज्ञातद्धितयोर्विषये, उत्तरपदे च परे, समाहारे चार्थे, अयमेव चासंज्ञायां द्विगुश्च । पञ्चाम्राः, सप्तर्षयः, द्वैमातुरः, अध्यर्धकंसः, पञ्चगवधनः, पञ्चनावप्रियः, पञ्चराजी । समाहारे चेति किम् ? अष्टौ प्रवचनमातारः । अनाम्नीति किम् ? पाञ्चर्षम् ॥

[172] सिद्धहेमशब्दानुशासनम् - संख्यासंभद्रान्मातुर्मातुर्च (६.१.६६)
संख्यार्थात् सम्भद्राभ्यां च परो यो माता, तदन्तादपत्येऽण् स्यात्, मातुश्च मातुर् । द्वैमातुरः, सांमातुरः भाद्रमातुरः ॥

[173] सिद्धहेमशब्दानुशासनम् - मूल्यैः क्रीते (६.४.१५०)
मूल्यार्थाद्दान्तात् क्रीतेऽर्थे यथोक्तं प्रत्ययाः स्युः । प्रास्थिकम्, त्रिंशकम् ॥

[174] सिद्धहेमशब्दानुशासनम् - अनाम्न्यद्विः प्लुप् (६.४.१४१)
द्विगोराऽर्हदर्थे जातस्य प्रत्ययस्य पित् लुप् स्यात्, न तु द्विः अनाम्नि । द्विकंसम् । अनाम्नीति किम् ? पाञ्चलोहितिकम् । अद्विरिति किम् ? द्विशूर्पेण क्रीतं द्विशोर्पिकम् ॥

[175] सिद्धहेमशब्दानुशासनम् - कसमासेऽध्यर्धः (१.१.४१)
अध्यर्धशब्दः के समासे च विधेये संख्यावत् स्यात् । अद्यर्धकम्, अध्यर्धशूर्पम् ॥

[176] क - नास्ति

[177] सिद्धहेमशब्दानुशासनम् - गोस्तत्पुरुषात् (७.३.१०५)
गवन्तात् तत्पुरुषादलुकोऽट् स्यात् । राजगवी । तत्पुरुषादिति किम् ? चित्रगुः । अलुक इत्येव? पञ्चगुः पटः ॥

[178] क - पात्रादिवर्जितोत्तरपदः

[179] क - पंचश्यैची, ख - पंचशौची

[180] क - चतुःकषायी

"द्विगोः समाहारादि"ति[181] स्त्रियां ङीप्र० । एवमग्रेऽपि । पात्रादिवर्जनं किम्[182] । द्विपात्रं त्रिभुवनं त्रिशृंगं चतुर्युगं । अन्नन्त । पञ्चराजी । पञ्चराजम् । अत्र "राजन् सखे"रित्यट्[183] स० । "नोऽपदस्य तद्धिते"[184] इत्यन्लोपः । आबन्त । पञ्चमाली पञ्चमालम् । द्विशाली द्विशालम्[185] । "क्लीबे"[186] इति ह्रस्वः । (शेष । पञ्चमुनि । चतुर्बुद्धि । पञ्चकुमारि । चतुःप्रतोलि । पञ्चसाधु । सप्तधेनु । चतुर्वधु । पञ्चपितृ । अष्टमातृ । पञ्चरि । पञ्चगु । पञ्चनु । सर्वत्र क्लीबे ह्रस्व इति ह्रस्वः ।)[187] "अनतो लुपि"ति[188] सेरमश्च लोपः । अत्रैकवचनमेवायाति । इति द्विगुसमासः ॥

इदानीं कर्मधारयलक्षणमुच्यते[189] ।

**विशेषणवाचि नाम विशेष्यनाम्ना यत्र समस्यते स कर्मधारयस्तत्पुरुषश्च स्यात् ।**[190]

यतो यत्र यत्र कर्मधारयस्तत्र तत्र तत्पुरुषः स्यात् । तत्पुरुषे तु कर्मधारयो न स्यात् । तथा हि । नीलं च तदुत्पलं च नीलोत्पलम् । खञ्जश्चासौ कुण्टश्च खञ्जकुण्टः । कुण्टखञ्जः । अत्रोभयथापि[191] स्यात् ।

(एतदेव विशेषतः प्राह)[192] |

---

[181] सिद्धहेमशब्दानुशासनम् - द्विगोः समाहारात् (२.४.२२)
समाहारद्विगोरदन्तात् स्त्रियां ङीः स्यात् । पञ्चपूली, दशराजी ॥

[182]

[183] सिद्धहेमशब्दानुशासनम् - राजन्सखेः (७.३.१०६)
एतदन्तात् तत्पुरुषादट् स्यात् । पञ्चराजी, राजसखः ॥

[184] सिद्धहेमशब्दानुशासनम् - नोऽपदस्य तद्धिते (७.४.६१)
नन्तस्यापदस्य तद्धिते परेऽन्त्यस्वरादेर्लुक् स्यात् । मैधावः । अपदस्येति किम् ? मेधाविरूप्यम्॥

[185] ख - चतुःशाली, चतुःशालम्

[186] सिद्धहेमशब्दानुशासनम् - क्लीबे (२.४.९७)
नपुंसकवृत्तेः स्वरान्तस्य ह्रस्वः स्यात् । कीलालपम्, अतिनु कुलम् ॥

[187] क - नास्ति

[188] सिद्धहेमशब्दानुशासनम् - अनतो लुप् (३.२.६)
अदन्तवर्जस्याव्ययीभावस्य स्यादेर्लुप् स्यात् । उपवधु, उपकर्तृ । अनत इति किम् ? उपकुम्भात् । अव्ययीभावस्येत्येव - प्रियोपवधुः ॥

[189] ख - कर्मधारय उच्यते

[190] सिद्धहेमशब्दानुशासनम् - विशेषणं विशेष्येणैकार्थं कर्मधारयश्च (३.१.९६)
भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिरेकार्थ्यम्, तद् विशेषणवाचि विशेष्यवाचिनैकार्थ्ये समासस्तत्पुरुषः कर्मधारयश्च स्यात् । नीलोत्पलम्, खञ्जकुण्टः, कुण्टखञ्जः । एकार्थमिति किम् ? वृद्धस्योक्षा वृद्धोक्षा ॥

[191] ख - इत्युभयथापि

**संख्यासंज्ञासन्महदुर्वादिविशेषणैर्विशेष्यं यत् चासौ च तदिति युक्त्या समस्यते कर्मधारयः[193] ॥ ९**

व्याख्या ।

संख्यादयः संज्ञादिवाचिनः सन्महदादयः उर्वादयश्च विशेषणशब्दाः[194] परेण विशेष्यनाम्ना यत्र समस्यन्ते स कर्मधारयः । **संख्यादयः**[195] । (पंचाम्राः)[196] द्वैमातुरः[197] अध्यर्धकंसः । निष्पत्तिः प्राग्वत्[198] । पूर्वस्नातः पश्चादनुलिप्तः । स्नातश्चासावनुलिप्तश्च स्नातानुलिप्तः[199] । एकपुरुषः । सर्वाह्नं । जरद्गवः । पुराणकविः । नवोक्तिः । केवलज्ञानम् । वैयाकरणखसूची[200] । मीमांसकदुर्दुरूढः । व्याघ्र इव व्याघ्रः । पुरुषश्चासौ व्याघ्रश्च पुरुषव्याघ्रः[201] । एवं श्वसिंही । "पुंवत्कर्मधारये"[202] इति पुंवत्त्वम्[203] । (**संज्ञा** । उत्तरकोशलाः[204] । पंचाम्राः ।)[205] **सन्महदादि**[206] । सत्पुरुषः । महापुरुषः ।

---

[192] क - नास्ति

[193] ख - कर्मधारयकः

[194] ख - शब्दाः

[195] सिद्धहेमशब्दानुशासनम् - संख्या समाहारे च द्विगुश्चानाम्न्ययम् (३.१.९९)

संख्यावाचि परेण नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात्, संज्ञातद्धितयोर्विषये, उत्तरपदे च परे, समाहारे चार्थे, अयमेव चासंज्ञायां द्विगुश्च । पञ्चाम्राः, सप्तर्षयः, द्वैमातुरः, अध्यर्धकंसः, पञ्चगवधनः, पञ्चनावप्रियः, पञ्चराजी । समाहारे चेति किम् ? अष्टौ प्रवचनमातारः । अनाम्नीति किम् ? पाञ्चर्षम् ॥

[196] ख - नास्ति

[197] क - द्वौमातुरः

[198] ख - प्राग्वत् निष्पत्तिः

[199] सिद्धहेमशब्दानुशासनम् - पूर्वकालैकसर्वजरत्पुराणनवकेवलम् (३.१.९७)

पूर्वः कालो यस्य तद्वाच्येकादीनि चैकार्थानि परेण नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात् । स्नातानुलिप्तः, एकशाटी, सर्वान्नम्, जरद्गवः, पुराणकविः, नवोक्तिः, केवलज्ञानम् । एकार्थमित्येव - स्नात्वानुलिप्तः ॥

[200] सिद्धहेमशब्दानुशासनम् - निन्द्यं कुत्सनैरपापाद्यैः (३.१.१००)

निन्द्यवाचि निन्दाहेतुभिः पापादिवर्जैः सह समासस्तत्पुरुषः कर्मधारयश्च स्यात् । वैयाकरणखसूची, मीमांसकदुर्दुरूढः । निन्द्यमिति किम् ? वैयाकरणश्चौरः । अपापाद्यैरिति किम् ? पापवैयाकरणः, हतविधिः ॥

[201] सिद्धहेमशब्दानुशासनम् - उपमेयं व्याघ्राद्यैः साम्यानुक्तौ (३.१.१०२)

उपमेयवाच्येकार्थमुपमानवाचिभिर्व्याघ्राद्यैः साधारणमधर्मानुक्तौ समासस्तत्पुरुषः कर्मधारयश्च स्यात् । पुरुषव्याघ्रः, श्वसिंही । सामान्यानुक्ताविति किम् ? पुरुषव्याघ्रः शूर इति मा भूत् ॥

[202] सिद्धहेमशब्दानुशासनम् - पुंवत् कर्मधारये (३.२.५७)

परतः स्त्री अनूङ् कर्मधारये सति स्त्र्येकार्थे उत्तरपदे परे पुंवत् स्यात् । कल्याणप्रिया, मद्रकभार्या, माथुरवृन्दारिका, चन्द्रमुखवृन्दारिका । अनूङित्येव - ब्रह्मबन्धूवृन्दारिका ॥

[203] ख - पुंवद्भावः

[204] सिद्धहेमशब्दानुशासनम् - दिगधिकं संज्ञातद्धितोत्तरपदे (३.१.९८)

"जातीयैकार्थ्येऽच्वेः"[207] डाप्र० । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । **उर्वादयस्त्विमे** । उरुगुरुपटुकटुऋजुमृदुचारुविभुलघुबहुतनुपृथुशिशुसाधु । उरुपुरुषः इत्यादि ।
इति कर्मधारयः ॥

सांप्रतमव्ययीभावलक्षणादिकमाह ।
**स्यादव्ययपूर्वपदस्तदर्थयुक्तोऽव्ययी स च क्लीबः ।**
**अनदंताल्लुप् स्यादेरादिश्चास्मिन्नपंचम्याः ॥ १०**

व्याख्या ।
प्रायोऽव्ययपूर्वपदोऽव्ययार्थद्योतकः[208] क्लीबलिंगोऽव्ययीभावः स्यात् । यथा । कुंभस्य समीपमुपकुम्भम्[209] । तत्राकारान्तवर्जान्नाम्नः सर्वस्यापि[210] स्यादेर्लुप् स्यात् । यथा । मुनेः समीपमुपमुनि । एवमुपकुमारि । उपसाधु । उपवधु । (उपपितृ । उपद्यु । उपनु)[211] । सर्वत्र "क्लीबे"[212] ह्रस्वः । "अनतो लुपि"ति[213] स्यादेर्लुप् । अदन्तात्तु नाम्नः पंचमीं मुक्त्वा स्यादेर्नित्यं[214] तृतीयासप्तम्योस्तु वाऽम् स्यात्[215] । यथा उपकुम्भमस्ति

---

दिग्वाच्यधिकं चैकार्थं नाम्ना समासस्तत्पुरुषः कर्मधारयश्च स्यात्, संज्ञायां तद्धिते च विषयभूते उत्तरपदे च परतः । दक्षिणकोशलाः, पूर्वेषुकामशमी, दाक्षिणशालः, अधिकपाष्टिकः, उत्तरगवधनः, अधिकगवप्रियः ॥

[205] क - नास्ति

[206] सिद्धहेमशब्दानुशासनम् - सन्महत्परमोत्तमोत्कृष्टं पूजायाम् (३.१.१०७)
एतान्येकार्थानि पूजायां गम्यायां पूज्यवचनैः सह समासस्तत्पुरुषः कर्मधारयश्च स्युः । सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्तमपुरुषः, उत्कृष्टपुरुषः । पूजायामिति किम् ? सन् घटः, अस्तीत्यर्थः ॥

[207] सिद्धहेमशब्दानुशासनम् - जातीयैकार्थेऽच्वेः (३.२.७०)
महतोऽच्व्यन्तस्य जातीयरि एकार्थे चोत्तरपदे डाः स्यात् । महाजातीयः, महावीरः । जातीयैकार्थे इति किम्? महत्तरः । अच्वेरिति किम्? महद्भूता कन्या ॥

[208] क - प्रायोऽव्ययपूर्वोऽव्ययार्थद्योतकः

[209] ख - समीपम्

[210] ख - नास्ति

[211] ख - उपरित्र । उपरि । उपद्यु । उप तु स्यादिवचनेषु "अनतो लुप्" इति सर्वस्यादेर्लुप् ।

[212] सिद्धहेमशब्दानुशासनम् - क्लीबे (२.४.९७)
नपुंसकवृत्तेः स्वरान्तस्य ह्रस्वः स्यात् । कीलालपम्, अतिनु कुलम् ॥

[213] सिद्धहेमशब्दानुशासनम् - अनतो लुप् (३.२.६)
अदन्तवर्जस्याव्ययीभावस्य स्यादेर्लुप् स्यात् । उपवधु, उपकर्तृ । अनत इति किम् ? उपकुम्भात् । अव्ययीभावस्येत्येव - प्रियोपवधुः ॥

[214] सिद्धहेमशब्दानुशासनम् - अमव्ययीभावस्यातोऽपञ्चम्याः (३.२.२)

पश्य वेत्यादि । तृतीयायाम् । उपकुम्भमुपकुम्भेन । सप्तम्याम् । उपकुम्भं उपकुम्भे इत्यादि । १०

**यावदियत्त्वे प्रत्यभिवीप्साचिह्नैस्तृतीयया युद्धे ।**
**पंचम्या पर्याद्या अधि सप्तम्याद्ययुद्धेऽपि[216] ॥ ११**

इयत्त्वेऽवधारणे यावदिति नाम परेण नाम्ना समस्यते स चाव्ययीभावः[217] । एवमग्रेऽपि समासनाम वाच्यम् । यावंत्यमत्राणि भाजनानि यावदमत्रं अतिथीन् भोजय । "अमव्ययीभावस्यातोऽपञ्चम्याः"[218] इति शसोऽम्[219] । (तथा प्रतिशब्दौ वीप्सार्थे अल्पार्थे च नाम्ना समस्येते ।)[220] यथा गृहं गृहं प्रति प्रतिगृहमटति[221] । एवं प्रत्यर्थम् । अल्पार्थे शाकस्याल्पत्वं शाकप्रति । एवं (घृतं प्रति घृतप्रति)[222] । पलप्रति[223] । "नित्यं प्रतिनाऽल्पे"[224] इति समासः[225] । तथा प्रतिशब्दस्य प्रत्येकं व्याख्यानम्[226] । प्रत्यभी

---

अदन्तस्याव्ययीभावस्य स्यादेरम् स्यात्, न तु पञ्चम्याः । उपकुम्भमस्ति, उपकुम्भं धेहि । अव्ययीभावस्येति किम् ? प्रियोपकुम्भोऽयम् । अत इति किम् ? अधिस्त्रि । अपञ्चम्या इति किम् ? उपकुम्भात् ॥

[215] सिद्धहेमशब्दानुशासनम् - वा तृतीयायाः (३.२.३)
अदन्तस्याव्ययीभावस्य तृतीयाया अम् वा स्यात् । किं नः उपकुम्भम्, किं नः उपकुम्भेन । अव्ययीभावस्येत्येव - प्रियोपकुम्भेन ॥

सिद्धहेमशब्दानुशासनम् - सप्तम्या वा (३.२.४)
अदन्तस्याव्ययीभावस्य सप्तम्या अम् वा स्यात् । उपकुम्भम्, उपकुम्भे धेहि । अव्ययीभावस्येत्येव - प्रियोपकुम्भे ॥

[216] क - सप्तम्या च युद्धेऽपि

[217] सिद्धहेमशब्दानुशासनम् - यावदियत्त्वे (३.१.३१)
इयत्त्वेऽवधारणे गम्ये यावदिति नाम नाम्ना पूर्वपदार्थे वाच्ये समासोऽव्ययीभावः स्यात् । यावदमत्रं भोजय । इयत्त्व इति किम् ? यावद्दत्तं तावद्भुक्तम् ॥

[218] सिद्धहेमशब्दानुशासनम् - अमव्ययीभावस्यातोऽपञ्चम्याः (३.२.२)
अदन्तस्याव्ययीभावस्य स्यादेरम् स्यात्, न तु पञ्चम्याः । उपकुम्भमस्ति, उपकुम्भं धेहि । अव्ययीभावस्येति किम् ? प्रियोपकुम्भोऽयम् । अत इति किम् ? अधिस्त्रि । अपञ्चम्या इति किम् ? उपकुम्भात् ॥

[219] क - शब्दस्याम्

[220] ख - तथा वीप्सार्थे प्रतिशब्दः अल्पार्थे च नाम्ना समस्यते ।

[221] सिद्धहेमशब्दानुशासनम् - योग्यतावीप्सार्थानतिवृत्तिसादृश्ये (३.१.४०)
एष्वर्थेष्वव्ययं नाम्ना सह पूर्वपदार्थे समासोऽव्ययीभावः स्यात् । अनुरूपम्, प्रत्यर्थम्, यथाशक्ति, सशीलमनयोः ॥

[222] ख - सूपप्रति

[223] ख - पललप्रति

[224] सिद्धहेमशब्दानुशासनम् - नित्यं प्रतिनाल्पे (३.१.३७)

चिह्नवाचिना समस्येते[227] । अग्निं प्रति प्रत्यग्नि । अग्निमभि अभ्यग्नि शलभाः पतन्ति । "अनतो लुबि"ति[228] स्यादेर्लोपः[229] । तथान्त्यपादस्थसप्तमी द्विर्व्याख्यानादिहापि[230] संबध्यते । ततोऽयमर्थः । सप्तम्यन्तं नाम मिथ आदायेति क्रियाव्यतिहारे (तृतीयांतं च मिथः प्रहृत्येति च क्रियाव्यतिहारे)[231] समानरूपेण नाम्ना युद्धार्थे समस्यते ।[232] तथा हि । केशेषु केशेषु मिथ आदाय कृतं युद्धं केशाकेशि । एवं बाहूबाहवि बाहाबाहवि । "अस्वयंभुवोऽव्"[233] अवादेशः । तथा दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धं दण्डादण्डि । एवं (मुष्टीमुष्टि)[234] । मुष्टामुष्टि । (यष्टीयष्टि । यष्टायष्टि)[235] । शस्त्रीशस्त्रि । शस्त्राशस्त्रि[236] । पर्शूपर्शवि । (पर्शापर्शवि)[237] । सर्वत्र[238] "इच् युद्धे"[239]

---

अल्पार्थेन प्रतिना नाम नित्यं समासोऽव्ययीभावः स्यात् । शाकप्रति । अल्प इति किम् ? वृक्षं प्रति विद्युत् ॥

[225] ख - तथा वीप्सार्थे प्रतिशब्दः अल्पार्थे च नाम्ना समस्यते । यथा । गृहं गृहं प्रति प्रतिगृहमटति । एवं प्रत्यर्थम् । अल्पार्थे शाकस्याल्पत्वं शाकप्रति । एवं सूपप्रति । पललप्रति । नित्यं प्रतिनाल्पे समासः ॥

[226] क - व्याख्यान्

[227] सिद्धहेमशब्दानुशासनम् - लक्षणेनाभिप्रत्याभिमुख्ये (३.१.३३)
लक्षणं चिह्नम्, तद्वाचिनाऽऽभिमुख्यार्थावभिप्रती पूर्वपदार्थेऽर्थे समासोऽव्ययीभावः स्याताम् । अभ्यग्नि प्रत्यग्नि शलभाः पतन्ति । लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः । पूर्वपदार्थ इत्येव - अभ्यङ्का गावः ॥

[228] सिद्धहेमशब्दानुशासनम् - अनतो लुप् (३.२.६)
अदन्तवर्जस्याव्ययीभावस्य स्यादेर्लुप् स्यात् । उपवधु, उपकर्तृ । अनत इति किम् ? उपकुम्भात् । अव्ययीभावस्येत्येव - प्रियोपवधुः ॥

[229] ख - स्यादेर्लुप्

[230] क - द्विर्व्याख्यानात् तृतीयया युद्धे इत्यत्र युद्धार्थे

[231] ख - नास्ति

[232] सिद्धहेमशब्दानुशासनम् - तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः (३.१.२६)
तत्रेति सप्तम्यन्तं मिथ आदायेति क्रियाव्यतिहारे, तेनेति तृतीयान्तं मिथः प्रहृत्येति क्रियाव्यतिहारे, समानरूपेण नाम्ना युद्धविषयेऽन्यपदार्थे वाच्ये समासोऽव्ययीभावश्च स्यात् । केशाकेशि, दण्डादण्डि । तत्रेति तेनेति किम् ? केशांश्च केशांश्च गृहीत्वा, मुखं च मुखं च प्रहृत्य कृतं युद्धम् । आदायेति प्रहृत्येति च किम् ? केशेषु च केशेषु च स्थित्वा, दण्डैश्च दण्डैश्चागत्य कृतं युद्धं गृहकोकिलाभ्याम् । सरूपेणेति किम् ? हस्ते च पादे च गृहीत्वा कृतं युद्धम् । युद्ध इति किम् ? हस्ते च हस्ते चादाय सख्यं कृतम् ॥

[233] सिद्धहेमशब्दानुशासनम् - अस्वयम्भुवोऽव् (७.४.७०)
स्वयंभूवर्जोवर्णान्तस्यापदस्य तद्धितेऽव् स्यात् । औपगवः । अस्वयम्भुव इति किम् ? स्वायम्भुवः ॥

[234] ख - नास्ति

[235] ख - नास्ति

[236] क - शस्त्रीशस्त्रि

[237] ख - नास्ति

[238] ख - नास्ति

इतीच्प्र० । "इच्यस्वरे दीर्घ आच्च"[240] (इति दीर्घः)[241] । आत्त्वं च स्वरादौ न स्यात्[242] । अस्यसि । तथा पंचम्यंतनाम्ना पर्यादयः समस्यन्ते । परि अप वा त्रिगर्तेभ्यः परित्रिगर्तं अपत्रिगर्तं[243] वृष्टो मेघः । त्रिगर्त्तान् वर्जयित्वेत्यर्थः । आ ग्रामादाग्रामम् । एवं बहिर्ग्रामम् । प्राग्ग्रामम्[244] । "पर्यपाङ्बहिरच् पंचम्या"[245] इति समासः । तथाऽधिशब्दः सप्तम्यर्थे नाम्ना समस्यते[246] । स्त्रीषु अधि अधिस्त्रि । "क्लीबे" इति ह्रस्वः[247] । ११

**षष्ठ्या पारेमध्येऽग्रेऽनूपांतर्यथासुरवादिशब्दाः[248] ।**
**सम्यगिह समस्यन्ते ज्ञेयाऽन्येऽपि सूत्रेभ्यः ॥ १२**

पारेप्रभृतयः शब्दाः (षष्ठ्यन्तेन)[249] (पृथगर्थे)[250] नाम्ना समस्यन्ते । तथा हि । (गंगायाः पारं)[251] पारेगंगम्[252] । एवं मध्येगंगम् । अग्रेवणम् । "निष्प्राग्रे०"[253] णत्वम्

---

[239] सिद्धहेमशब्दानुशासनम् - इच् युद्धे (७.३.७४)
युद्धे यः समास उक्तस्तस्मादिच् समासान्तः स्यात् । केशाकेशि ॥

[240] सिद्धहेमशब्दानुशासनम् - इच्यस्वरे दीर्घ आच्च (३.२.७२)
इजन्तेऽस्वरादावुत्तरपदे पूर्वपदस्य दीर्घ आच्च स्यात् । मुष्टीमुष्टि. मुष्टामुष्टि । अस्वर इति किम् ? अस्यसि ॥

[241] ख - नास्ति

[242] ख - स्वरादौ तु अस्यसि ।

[243] ख - परित्रिगर्ता अपत्रिगर्ता

[244] क - नास्ति

[245] सिद्धहेमशब्दानुशासनम् - पर्यपाङ्बहिरच् पञ्चम्या (३.१.३२)
एतानि पञ्चम्यन्तेन पूर्वपदार्थे वाच्ये समासोऽव्ययीभावः स्युः । परित्रिगर्तम्, अपत्रिगर्तम्, आग्रामम्, बहिर्ग्रामम्, प्राग्ग्रामम् । पञ्चम्येति किम् ? परि वृक्षं विद्युत् ॥

[246] सिद्धहेमशब्दानुशासनम् - विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकाल्यान्तेऽव्ययम् (३.१.३९)
एष्वर्थेषु वर्तमानमव्ययं नाम्ना सह पूर्वपदार्थे वाच्ये नित्यं समासोऽव्ययीभावः स्यात् । विभक्ति - विभक्त्यर्थः कारकम्, अधिस्त्रि । समीप - उपकुम्भम् । समृद्धि - सुमद्रम् । विगता ऋद्धिर्व्यृद्धिः - दुर्यवनम् । अर्थाभावः - निर्मक्षिकम् । अत्ययोऽतीतत्वम् - अतिवर्षम् । असम्प्रतीति सम्प्रत्युपभोगाद्यभावः - अतिकम्बलम् । पश्चात् - अनुरथम् । क्रम - अनुज्येष्ठम् । ख्याति - इतिभद्रबाहु । युगपत् - सचक्रं धेहि । सदृक् - सव्रतम् । सम्पत् - सब्रह्म साधूनाम् । साकल्य - सतृणमभ्यवहरति । अन्त - सपिण्डैषणमधीते ॥

[247] ख - क्लीबे ह्रस्वः
सिद्धहेमशब्दानुशासनम् - क्लीबे (२.४.९७)
नपुंसकवृत्तेः स्वरान्तस्य ह्रस्वः स्यात् । कीलालपम्, अतिनु कुलम् ॥

[248] ख - पारेमध्येऽग्रेऽनूपान्तर्यथासुरवमुखाः

[249] क - नास्ति

[250] ख - नास्ति

। (अंतर्गिरि)[254] (अंतर्गिरम्)[255] । अंतर्नदम् । अंतःपूर्णिमासम्[256] । "गिरिनदीपूर्णिमास्या०"[257] इत्यत् । "पारेमध्येऽग्रेऽन्तः षष्ठ्या वे"ति[258] समासो वा[259] स्यात् । तेन[260] पक्षे गंगापारमित्याद्यपि तत्पुरुषः[261] स्यात् । पारेमध्येऽग्रेन्त इत्यलुप्तनिर्देशादेत्वम्[262] । तथाऽनुशब्दः समीपदैर्घ्यपश्चात्क्रमयोग्यताऽर्थेषु नाम्ना समस्यते । यथा[263] । वनस्य समीपमनुवनमशनिर्गता । गंगामनु आयता अनुगंगं वाणारसी । रथस्य पश्चादनुरथम् । ज्येष्ठस्यानतिक्रमेणानुज्येष्ठं साधून् वन्दते । रूपस्य योग्यताऽनुरूपम् । तथा । (उपशब्दः समीपार्थे नाम्ना समस्यते । कुम्भस्य समीपं उपकुम्भम् । यथाशब्दोऽनतिक्रमेऽर्थे नाम्ना समस्यते । शक्तेरनतिक्रमेण यथाशक्ति ।)[264] आदिशब्दात्सह नाम[265] युगपत्सदृक्संपत्साकल्यान्तसादृश्येषु नाम्ना समस्यते[266] ।

---

[251] ख - नास्ति

[252] ख - पारेगंगा पारेगंगं

[253] सिद्धहेमशब्दानुशासनम् - निष्प्राग्रेऽन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयुक्षाभ्यो वनस्य (२.३.६६)
निरादिभ्यः परस्य वनस्य नो ण् स्यात् । निर्वणम्, प्रवणम्, अग्रेवणम्, अन्तर्वणम्, खदिरवणम्, कार्श्यवणम्, आम्रवणम्, शरवणम्, इक्षुवणम्, प्लक्षवणम्, पीयुक्षावणम् ॥

[254] ख - नास्ति

[255] क - नास्ति

[256] क - अंतःपूर्णमास्योः

[257] सिद्धहेमशब्दानुशासनम् - गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा (७.३.९०)
एतदन्तात् पञ्चमवर्जवर्ग्यान्ताच्चाव्ययीभावादद् वा स्यात् । अन्तर्गिरम्, अन्तर्गिरि, उपनदम्, उपनदी, उपपौर्णमासम्, उपपौर्णमासि, उपाग्रहायणम्, उपाग्रहायणि, उपस्रुचम्, उपस्रुक् ॥

[258] सिद्धहेमशब्दानुशासनम् - पारेमध्येऽग्रेऽन्तः षष्ठ्या वा (३.१.३०)
एतानि षष्ठ्यन्तेन पूर्वपदार्थे समासोऽव्ययीभावो वा स्युः । पारेगङ्गम्, मध्येगङ्गम्, अग्रेवणम्, अन्तर्गिरम्; पक्षे गङ्गापारम्, गङ्गामध्यम्, वनाग्रम्, गिर्यन्तः ॥

[259] ख - वा समासः

[260] क - ततः

[261] ख - गंगापारं इत्यादि तत्पुरुषोऽपि

[262] ख - पारेमध्येऽग्रे इत्यत्र सूत्रनिर्देशात् एत्वम् ।

[263] ख - तथा

[264] ख - समीपार्थे उपशब्दो यथाशब्दोऽनतिक्रमार्थे नाम्ना समस्यते । समीपं कुम्भस्य उपकुम्भम् । शक्तेरनतिक्रमेण यथाशक्ति ।

[265] ख - नास्ति

[266] सिद्धहेमशब्दानुशासनम् - विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकाल्यान्तेऽव्ययम् (३.१.३९)
एष्वर्थेषु वर्तमानमव्ययं नाम्ना सह पूर्वपदार्थे वाच्ये नित्यं समासोऽव्ययीभावः स्यात् । विभक्ति - विभक्त्यर्थः कारकम्, अधिस्त्रि । समीप - उपकुम्भम् । समृद्धि - सुमद्रम् । विगता ऋद्धिर्व्यृद्धिः - दुर्यवनम् । अर्थाभावः - निर्मक्षिकम् । अत्ययोऽतीतत्वम् - अतिवर्षम् । असम्प्रतीति सम्प्रत्युपभोगाद्यभावः - अतिकम्बलम् । पश्चात् - अनुरथम् । क्रम - अनुज्येष्ठम् ।

(तथा हि)[267] । चक्रेण सह सचक्रं धेहि । व्रतस्य सदृक् सव्रतम् । ब्रह्मणः संपत् सब्रह्म साधूनां तृणैः । साकल्यं सतृणमभ्यवहरति । पिण्डैषणामन्तेकृत्य सपिंडैषणमधीते । शीलस्य सादृश्यं सशीलमनयोः[268] ॥ "सर्वत्राकालेऽव्ययीभावे"[269] इति सहस्य सत्वम्[270] । तथा संख्यावाचि समाहारे नदीनाम्ना समस्यते[271] । द्वयोर्यमुनयोः समाहारो द्वियमुनम् । एवं पंचनदम् । "संख्याया नदीगोदावरीभ्यामि"त्यत्[272] । इत्यादि सूत्रेभ्यो ज्ञातव्यम् । इत्यव्ययीभावः (समासः)[273] ।

सांप्रतं तत्पुरुषलक्षणभेदौ प्राह ।

**पदं सप्तविभक्त्यन्तं प्रथमान्तैः पदैः समं ।**
**समस्यं तत्पुरुषोऽयम् परलिंगाऽशुगोऽपि हि[274] ॥ १३**

सुगमः । भेदद्वय्यपि विभक्तिक्रमेण प्रदर्श्यते ।

तत्र **प्रथमा**[275] ।

गतिवाचिनामानि[276] नाम्ना समस्यन्ते[277] । तथा हि । ऊरीकरणं पूर्वं ऊरीकृत्य[278] । एवमुररीकृत्यांगीकृत्य । अनुकरण । षाट्कृत्य । छीत्कृत्य । च्व्यन्त । शुक्लीकृत्य ।

---

ख्याति - इतिभद्रबाहु । युगपत् - सचक्रं धेहि । सदृक् - सव्रतम् । सम्पत् - सब्रह्म साधूनाम् । साकल्य - सतृणमभ्यवहरति । अन्त - सपिण्डैषणमधीते ॥

[267] ख - नास्ति

[268] सिद्धहेमशब्दानुशासनम् - योग्यतावीप्सार्थानतिवृत्तिसादृश्ये (३.१.४०)
एष्वर्थेष्वव्ययं नाम्ना सह पूर्वपदार्थे समासोऽव्ययीभावः स्यात् । अनुरूपम्, प्रत्यर्थम्, यथाशक्ति, सशीलमनयोः ॥

[269] सिद्धहेमशब्दानुशासनम् - अकालेऽव्ययीभावे (३.२.१४६)
अकालवाचिन्युत्तरपदे सहस्याव्ययीभावे सः स्यात् । सब्रह्म साधूनाम् । अकाल इति किम् ? सहपूर्वाह्णं शेते । अव्ययीभाव इति किम् ? सहयुध्वा ॥

[270] ख - भावः

[271] सिद्धहेमशब्दानुशासनम् - सङ्ख्या समाहारे (३.१.२८)
संख्यावाचि नदीवाचिभिः समाहारे गम्ये समासोऽव्ययीभावः स्यात् । द्वियमुनम्, पञ्चनदम् । समाहार इति किम् ? एकनदी ॥

[272] सिद्धहेमशब्दानुशासनम् - संख्याया नदीगोदावरीभ्याम् (७.३.९१)
संख्यार्थात् परौ यावेतौ तदन्तादव्ययीभावादत् स्यात् । पञ्चनदम्, द्विगोदावरम् ॥

[273] ख - नास्ति

[274] क - परलिंगांशुमौपिछि, ख - परलिंगोऽशुगोपिहि - अस्पष्टम्

[275] ख - प्रथमा

[276] ख - गतिवाचि नाम

[277] सिद्धहेमशब्दानुशासनम् - गतिक्वन्यस्तत्पुरुषः (३.१.४२)
गतयः कुश्च नाम्ना सह नित्यं समासस्तत्पुरुषः स्युः, अन्यः बहुव्रीह्यादिलक्षणहीनः । ऊरीकृत्य, खाट्कृत्य, प्रकृत्य, कारिकाकृत्य, कुब्राह्मणः, कोष्णम् । अन्य इति किम् ? कुपुरुषकः ॥

[278] सिद्धहेमशब्दानुशासनम् - ऊर्याद्यनुकरणच्विडाचश्च गतिः (३.१.२)

शुचीकृत्य । (शुचीभूय)[279] । डाजंत । पटपटाकृत्य । उपसर्ग । प्रकरणं पूर्वं प्रकृत्य । पराभूयापमित्यपिधाय । इत्यत्र "वावाप्योस्तनिक्रीधाग्नहोर्वपी"[280] इत्यपेरलोपः । संहृत्य । अनूद्य । अवगणय्य । निर्गत्य । निर्गम्येत्यत्र "वा मः"[281] इति वा मलोपः । दुर्ध्यायाभिमन्त्र्य । वितत्यारोप्य । अतीत्य प्रतीक्ष्य । निर्म्माय । उपदाय । दीङो दागो वा प्रयोगः[282] । उत्पत्त्य[283] । परिरभ्याधीत्य । सुशब्दोऽग्रे वक्ष्यते । तथाऽलंकृत्य (सत्कृत्य असत्कृत्य)[284] ।[285] अंतर्हत्य[286] । अदःकृत्य । कणेहत्य ।[287] मनोहत्य । पुरस्कृत्य[288] । अस्तंगत्य । तिरोभूय[289] । हस्तेकृत्य[290] । पाणौकृत्य । मध्येकृत्य मध्ये कृत्वा[291] । मनसिकृत्य मनसि कृत्वा । उरसिकृत्य उरसि कृत्वा । एषु वा

---

एते उपसर्गाश्च धातोः सम्बन्धिनो गतयः स्युः , ते च प्राग्धातोः । ऊर्यादि - ऊरीकृत्य उररीकृत्य । अनुकरण - खाट्कृत्य; च्व्यन्त - शुक्लीकृत्य; डाजन्त - पटपटाकृत्य; उपसर्ग - प्रकृत्य ॥

[279] क - नास्ति

[280] सिद्धहेमशब्दानुशासनम् - वावाप्योस्तनिक्रीधाग्नहोर्वपी (३.२.१५६)
अवस्योपसर्गस्य तनिक्रियोरपेश्च धाग्नहोः परयोर्यथासंख्यं व-पी वा स्याताम् । वतंसः, अवतंसः; वक्रयः, अवक्रयः; पिहितम्, अपिहितम्; पिनद्धम्, अपिनद्धम् ॥

[281] सिद्धहेमशब्दानुशासनम् - वा मः (४.२.५७)
यम्यादीनां मन्तानां यपि लुग्वा स्यात् । प्रयत्य, प्रयम्य; विरत्य, विरम्य; प्रणत्य, प्रणम्य; आगत्य, आगम्य ॥

[282] सिद्धहेमशब्दानुशासनम् - यबक्ङिति (४.२.७)
दीङो यपि, अक्ङिति च विषये आत् स्यात् । उपदाय, उपदायो वर्त्तते ॥

[283] ख - इत्यत्य ??

[284] ख - नास्ति

[285] सिद्धहेमशब्दानुशासनम् - भूषादरक्षेपेऽलंसदसत् (३.१.४)
एष्वर्थेष्वेते यथासंख्यं गतयः स्युः । अलङ्कृत्य, सत्कृत्य, असत्कृत्य । भूषादिष्विति किम् ? अलं कृत्वा, मा कारीत्यर्थः ॥

[286] सिद्धहेमशब्दानुशासनम् - अग्रहानुपदेशेऽन्तरदः (३.१.५)
अनयोरर्थयोरेतौ यथासंख्यं गती स्याताम् । अन्तर्हत्य, अदःकृत्यैतत्कर्तेति ध्यायति ॥

[287] सिद्धहेमशब्दानुशासनम् - कणेमनस् तृप्तौ (३.१.६)
एतावव्ययौ तृप्तौ गम्यायां गती स्याताम् । कणेहत्य मनोहत्य पयः पिबति । तृप्ताविति किम् ? तण्डुलावयवे कणे हत्वा ॥

[288] सिद्धहेमशब्दानुशासनम् - पुरोऽस्तमव्ययम् (३.१.७)
एतावव्ययौ गती स्याताम् । पुरस्कृत्य, अस्तङ्गत्य । अव्ययमिति किम् ? पुरः कृत्वा, नगरीरित्यर्थः ॥

[289] सिद्धहेमशब्दानुशासनम् - तिरोऽन्तर्द्धौ (३.१.९)
तिरोऽन्तर्द्धौ गतिः स्यात् । तिरोभूय ॥

[290] सिद्धहेमशब्दानुशासनम् - नित्यं हस्तेपाणावुद्वाहे (३.१.१५)
एतावव्ययावुद्वाहे गम्ये कृग्योगे गती स्याताम् । हस्तेकृत्य, पाणौकृत्य । उद्वाह इति किम् ? हस्ते कृत्वा काण्डं गतः ॥

[291] सिद्धहेमशब्दानुशासनम् - मध्येपदेनिवचनेमनस्युरस्यनत्याधाने (३.१.११)

गतिसंज्ञा । (गतित्वादव्ययत्वम् । अव्ययत्वात्)[292] समासफलं[293] सर्व"त्राऽनञः क्त्वो यप्" [294] इति क्त्वो यप् । तथा स्वतिदुःकुनञ्नामानि नाम्ना समस्यन्ते । (सुः पूजायाम् ।)[295] शोभनो राजा सुराजा । अतिराजा[296] । "राजन् सखेः"[297] इत्यट् प्राप्तोऽपि "पूजास्वतेः"[298] इति निषिद्धः । तथा दुष्टः पुरुषो दुष्पुरुषः[299] । कृच्छ्रेण कृतं दुष्कृतम् । तथा कुत्सितो गुरुः कुगुरुः[300] कुदेवः कदश्वः कदाग्रहः कदिच्छा कदीहा कदुषा कदूहः कदृणं कदेणः कदैलविलः कदोकः कदौशीनरः । इत्यादौ स्वरे परे "कोः कत्तपुरुष"[301] इति कोः कद् । कद्रथः कद्वद अत्र "रथवदे"[302] इति कद् । काक्षं कापथम् । अत्र[303]

---

अनत्याधानम् अनुपश्लेषोऽनाश्चर्यं वा, तद्वृत्तय एतेऽव्ययाः कृग्योगे गतयो वा स्युः । मध्येकृत्य, मध्ये कृत्वा; पदेकृत्य, पदे कृत्वा; निवचनेकृत्य, निवचने कृत्वा; मनसिकृत्य, मनसि कृत्वा; उरसिकृत्य, उरसि कृत्वा ॥

[292] क - नास्ति

[293] ख - नास्ति

[294] सिद्धहेमशब्दानुशासनम् - अनञः क्त्वो यप् (३.२.१५४)

नञोऽन्यस्मादव्ययात् पूर्वपदात् परं यदुत्तरपदं तदवयवस्य क्त्वो यप् स्यात् । प्रकृत्य । अनञ इति किम् ? अकृत्वा, परमकृत्वा । उत्तरपदस्येत्येव - अलं कृत्वा ॥

[295] क - नास्ति

सिद्धहेमशब्दानुशासनम् - सुः पूजायाम् (३.१.४४)

स्वित्यव्ययं पूजार्थं नाम्ना सह नित्यं समासस्तत्पुरुषः स्यात् । सुराजा । अन्य इत्येव - सुमद्रम् ॥

[296] सिद्धहेमशब्दानुशासनम् - अतिरतिक्रमे च (३.१.४५)

अतिक्रमे पूजायां चार्थे अतीत्यव्ययं नाम्ना समासस्तत्पुरुषः स्यात् । अतिस्तुत्य, अतिराजा ॥

[297] सिद्धहेमशब्दानुशासनम् - राजन्सखेः (७.३.१०६)

एतदन्तात् तत्पुरुषादट् स्यात् । पञ्चराजी, राजसखः ॥

[298] सिद्धहेमशब्दानुशासनम् - पूजास्वतेः प्राक् टात् (७.३.७२)

पूजार्थस्वतिभ्यां परं यद् ऋगादि तदन्तात् टात् प्राग्यः समासान्तः स न स्यात् । सुधूः, अतिधूरियम् । पूजेति किम् ? अतिराजोऽरिः । प्राक्टादिति किम् ? स्वङ्गुलं काष्ठम् ॥

[299] सिद्धहेमशब्दानुशासनम् - दुर्निन्दाकृच्छ्रे (३.१.४३)

दुरव्ययं निन्दाकृच्छ्रवृत्ति नाम्ना सह नित्यं समासस्तत्पुरुषः स्यात् । दुष्पुरुषः, दुष्कृतम् । अन्य इत्येव - दुष्पुरुषकः ॥

[300] सिद्धहेमशब्दानुशासनम् - गतिक्वन्यस्तत्पुरुषः (३.१.४२)

गतयः कुश्च नाम्ना समासस्तत्पुरुषः स्युः, अन्यः बहुव्रीह्यादिलक्षणहीनः । ऊरीकृत्य, खाट्कृत्य, प्रकृत्य, कारिकाकृत्य, कुब्राह्मणः, कोष्णम् । अन्य इति किम् ? कुपुरुषकः ॥

[301] सिद्धहेमशब्दानुशासनम् - कोः कत्तत्पुरुषे (३.२.१३०)

स्वरादावुत्तरपदे कोस्तत्पुरुषे कद् स्यात् । कदश्वः । तत्पुरुष इति किम् ? कूष्ट्रो देशः । स्वर इत्येव - कुब्राह्मणः ॥

[302] सिद्धहेमशब्दानुशासनम् - रथवदे (३.२.१३१)

रथे वदे चोत्तरपदे कोः कद् स्यात् । कद्रथः, कद्वदः ॥

[303] क - नास्ति

“काऽक्षपथोः”[304] इति का । कापुरुषः कुपुरुषः[305] । अत्र “पुरुषे वा”[306] इति वा का । कुशब्दः ईषदर्थेऽपि । तेन ईषन्मधुरं कामधुरम् । एवं काच्छम् । काम्लम् । इत्यादौ “अल्पे”[307] इति सूत्रेण व्यंजने स्वरे वा नित्यं का[308] । तथा कोष्णं कवोष्णं कदुष्णं जलम् । अत्र “काकवौ वोष्णे”[309] इति त्रिरूपत्वम्[310] । तथा । नञ्[311] । न गौरगौः । एवमपुरुषः । अनवकाशः । अनादरः ।

**द्वितीया** ।

न सूर्यमपि पश्यन्तीति असूर्यंपश्या राजदाराः । “असूर्योग्राद्दृशः”[312] इति खश् प्र० । “श्रौतीत्यादिना पश्यादेशः”[313] । तथा । कुम्भं करोतीति कुम्भकारः । अयस्कारः । “कर्मणोऽण्”[314] इत्यण् प्र० स्त्रियां “अणञे०”[315] इति ङ्यां कुंभकारी इत्यादि । एवं कुंभकृत् । अयस्कृत् । तीर्थकरः । पुण्यशाली । इत्यादौ कृदुक्ताः क्विपादयः स्युः । “ङस्युक्तं कृता”[316] इति समासः । धर्मं श्रितो धर्मश्रितः । एवं नरकपतितः ।

---

[304] सिद्धहेमशब्दानुशासनम् - काऽक्षपथोः (३.२.१३४)

अनयोरुत्तरपदयोः कोः का स्यात् । काक्षः, कापथम् ॥

[305] ख - नास्ति

[306] सिद्धहेमशब्दानुशासनम् - पुरुषे वा (३.२.१३५)

पुरुषे उत्तरपदे कोः का वा स्यात् । कापुरुषः, कुपुरुषः ॥

[307] सिद्धहेमशब्दानुशासनम् - अल्पे (३.२.१३६)

ईषदर्थस्य कोरुत्तरपदे का स्यात् । कामधुरम्, काच्छम् ॥

[308] ख - नास्ति

[309] सिद्धहेमशब्दानुशासनम्- काकवौ वोष्णे (३.२.१३७)

उष्णे उत्तरपदे कोः काकवौ वा स्याताम् । कोष्णम्, कवोष्णम् । पक्षे यथाप्राप्तमिति तत्पुरुषे कदुष्णम् । बहुव्रीहौ कूष्णो देशः ॥

[310] क - त्रिरूपी

[311] सिद्धहेमशब्दानुशासनम् - नञ् (३.१.५१)

नञ् नाम नाम्ना समासस्तत्पुरुषः स्यात् । अगौः, असूर्यंपश्या राजदाराः ॥

[312] सिद्धहेमशब्दानुशासनम् - असूर्योग्राद्दृशः (५.१.१२६)

आभ्यां कर्मभ्यां पराद् दृशेः खश् स्यात् । असूर्यम्पश्यः, उग्रम्पश्यः ॥

[313] ख - पश्य

सिद्धहेमशब्दानुशासनम् - श्रौतिकृवुधिवुपाघ्राध्मास्थाम्नादाम्दृश्यर्त्तिशदसदः शृकृधिपिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदम् (४.२.१०८)

एषां शित्यादौ यथासंख्यम् श्रादयः स्युः । शृणु, कृणु, धिनु, पिब, जिघ्र, धम, तिष्ठ, मन, प्रयच्छ, पश्य, ऋच्छ, शीयते, सीद ॥

[314] सिद्धहेमशब्दानुशासनम् - कर्मणोऽण् (५.३.१४)

क्रियायां क्रियार्थायामुपपदे कर्मणः पराद्भत्स्यर्दर्थाद् धातोरण् स्यात् । कुम्भकारो याति ॥

[315] सिद्धहेमशब्दानुशासनम् - अणञेयेकण्-नञ्-स्नञ्-टिताम् (२.४.२०)

अणादीनां योऽत् तदन्तात्तेषामेव स्त्रियां ङीः स्यात् । औपगवी, बैदी, सौपर्णेयी, आक्षिकी, स्त्रैणी, पौंस्नी, जानुदघ्नी ॥

[316] सिद्धहेमशब्दानुशासनम् - ङस्युक्तं कृता (३.१.४९)

कान्ताराततीतः । ग्रामगतः । गृहागतः । सुखप्राप्तः । दुखापन्नः । योजनप्रेरितः । "श्रितादिभिरि"ति[317] समासः ।

**तृतीया ।**

माषेनोनं माषोनम् । एवं माषविकलम् । मासपूर्वः[318] । दिनावरः ।
"ऊनार्थपूर्वाद्यैरि"ति[319] समासः । आत्मकृतम् । काकपेया नदी । बाष्पच्छेद्यानि[320] तृणानि । "कारकं कृता"[321] इति समासः ।

**चतुर्थी ।**

यूपाय दारु यूपदारु । एवं कुण्डलहिरण्यम् । "चतुर्थी प्रकृत्या"[322] इति[323] समासः । गोहितम् । गोसुखम् । "हितादिभिरि"ति[324] समासः । पित्रे इदं पित्रर्थं पयः । आतुरार्था यवागूः । ब्राह्मणार्थः सूपः । "तदर्थार्थेने"ति[325] समासः ।

**पञ्चमी ।**

वृकाद्भयं वृकभयम्[326] । वृकभीरुः । व्याघ्रभीतः ।

**षष्ठी ।**

राज्ञः पुरुषो राजपुरुषः[327]। कर्मदोषः[328] । ज्ञानदानम् । गणधरोक्तिः[329]। योगिनाथाय ।

---

कृत्प्रत्ययविधायके सूत्रे ङस्यन्तनाम्नोक्तं कृदन्तेन नाम्ना नित्यं समासस्तत्पुरुषः स्यात् । कुम्भकारः । ङस्युक्तमिति किम् ? अलं कृत्वा । कृतेति किम् ? धर्मो वो रक्षतु ॥

[317] सिद्धहेमशब्दानुशासनम् - श्रितादिभिः (३.१.६२)
द्वितीयान्तं श्रितादिभिः समासस्तत्पुरुषः स्यात् । धर्मश्रितः, शिवगतः ॥

[318] ख - मासपूर्णः । मासपूर्वः

[319] सिद्धहेमशब्दानुशासनम् - ऊनार्थपूर्वाद्यैः (३.१.६७)
तृतीयान्तम् ऊनार्थैः पूर्वाद्यैश्च समासस्तत्पुरुषः स्यात् । माषोनम्, माषविकलम्, मासपूर्वः, मासावरः ॥

[320] ख - बाष्पाच्छाद्यानि

[321] सिद्धहेमशब्दानुशासनम् - कारकं कृता (३.१.६८)
कारकवाचि तृतीयान्तं कृदन्तेन समासस्तत्पुरुषः स्यात् । आत्मकृतम्, नखनिर्भिन्नः, काकपेया नदी, बाष्पच्छेद्यानि तृणानि । कारकमिति किम् ? विद्ययोषितः ॥

[322] सिद्धहेमशब्दानुशासनम् - चतुर्थी प्रकृत्या (३.१.७०)
प्रकृतिः परिणामि कारणम्, एतद्वाचिनैकार्थ्ये चतुर्थ्यन्तं विकारार्थं समासस्तत्पुरुषः स्यात् । यूपदारु । प्रकृत्येति किम् ? रन्धनाय स्थाली ॥

[323] ख - नास्ति

[324] सिद्धहेमशब्दानुशासनम् - हितादिभिः (३.१.७१)
चतुर्थ्यन्तं हिताद्यैः समासस्तत्पुरुषः स्यात् । गोहितम्, गोसुखम् ॥

[325] सिद्धहेमशब्दानुशासनम् - तदर्थार्थेन (३.१.७१)
चतुर्थ्यर्थोऽर्थो यस्य तेनार्थेन चतुर्थ्यन्तं समासस्तत्पुरुषः स्यात् । पित्रर्थं पयः, आतुरार्था यवागूः । तदर्थेति किम् ? पित्रेऽर्थः ॥

[326] सिद्धहेमशब्दानुशासनम् - पञ्चमी भयाद्यैः (३.१.७३)
पञ्चम्यन्तं भयाद्यैरेकार्थ्ये समासस्तत्पुरुषः स्यात् । वृकभयम्, वृकभीरुः ॥

**सप्तमी** ।

पाने शौण्डः पानशौण्डः[330] । एवमक्षधूर्तः । समरे सिंह इव समरसिंहः[331] । भूमिवासवः । तीर्थकाकः[332] । तीर्थश्वा ।

**तथांशिसमासो**[333] यथा ।

पूर्वः कायस्य पूर्वकायः । एवमपरकायः । अधरकायः । उत्तरकायः । सायमह्नः सायाह्नः । सूत्रनिर्देशान्मलोपः[334] । एवं मध्यंदिनम् । तथार्धं पिप्पल्याः अर्धपिप्पली । पिप्पल्यर्धम् । "समेंऽशेऽर्धं न वा"[335] इति वा समासः । तथा अर्धो जरत्या अर्धजरती । जरत्यर्धः[336] । एवमर्धोक्तम् । उक्तार्धः । अग्रहस्तः । हस्ताग्रः । तलपादः । पादतलम् । अत्रापि वा स०[337] ॥

---

327 सिद्धहेमशब्दानुशासनम् - षष्ठ्ययत्नाच्छेषे (३.१.७६)

शेषे (२.२.८१) या षष्ठी तदन्तं नाम नाम्नैकार्थ्ये समासस्तत्पुरुषः स्यात्, न चेत् स शेषः नाथ (२.२.१०) इत्यादेर्यावत् । राजपुरुषः । अयत्नादिति किम् ? सर्पिषो नाथितम् । शेष इति किम् ? गवां कृष्णा सम्पन्नक्षीरा ॥

328 क - नास्ति

329 क - नास्ति

330 सिद्धहेमशब्दानुशासनम् - सप्तमी शौण्डाद्यैः (३.१.८८)

एभिः सहैकार्थ्ये सप्तम्यन्तं समासस्तत्पुरुषः स्यात् । पानशौण्डः, अक्षधूर्तः ॥

331 सिद्धहेमशब्दानुशासनम् - सिंहाद्यैः पूजायाम् (३.१.८९)

एभिः सप्तम्यन्तं समासस्तत्पुरुषः स्यात्, पूजायां गम्यायाम् । समरसिंहः, भूमिवासवः ॥

332 सिद्धहेमशब्दानुशासनम् - काकाद्यैः क्षेपे (३.१.९०)

एभिः सप्तम्यन्तं निन्दायां गम्यायां समासस्तत्पुरुषश्च स्यात् । तीर्थकाकः, तीर्थश्वा । क्षेप इति किम् ? तीर्थे काकोऽस्ति ॥

333 सिद्धहेमशब्दानुशासनम् - पूर्वापराधरोत्तरमभिन्नेनांशिना (३.१.५२)

पूर्वादयोंऽशार्था अंशवद्वाचिना समासस्तत्पुरुषः स्युः, न चेत् सोंऽशी भिन्नः । पूर्वकायः, अपरकायः, अधरकायः, उत्तरकायः । अभिन्नेनेति किम् ? पूर्वं छात्राणामामन्त्रयस्व । अंशिनेति किम् ? पूर्वो नाभेः, कायस्य ॥

334 सिद्धहेमशब्दानुशासनम् - सायाह्नादयः (३.१.५३)

एतेंऽशितत्पुरुषाः साधवः स्युः । सायाह्नः, मध्यन्दिनम् ॥

335 सिद्धहेमशब्दानुशासनम् - समेंऽशेऽर्धं न वा (३.१.५४)

समांशार्थमर्धमंशिनाऽभिन्नेन वा समासस्तत्पुरुषः स्यात् । अर्धपिप्पली, पिप्पल्यर्धम् । समेंऽश इति किम् ? ग्रामार्धः ॥

336 सिद्धहेमशब्दानुशासनम् - जरत्यादिभिः (३.१.५५)

एभिरंशिभिरभिन्नैरर्धो वा समासस्तत्पुरुषः स्यात् । अर्धजरती, जरत्यर्धः; अर्धोक्तम्, उक्तार्धः॥

337 सिद्धहेमशब्दानुशासनम् - द्वित्रिचतुष्पूरणाग्रादयः (३.१.५६)

पूरणप्रत्ययान्ता द्वित्रिचत्वारोऽग्रादयश्चाभिन्नेनांशिना वा समासस्तत्पुरुषः स्युः । द्वितीयभिक्षा, भिक्षाद्वितीयम्; तृतीयभिक्षा, भिक्षातृतीयम्; तुर्यभिक्षा; भिक्षातुर्यम्; अग्रहस्तः; हस्ताग्रम्; तलपादः. पादतलम् ॥

**प्रात्यवाद्या गताद्यर्थे[338] नाम्नाऽलं तुर्यया सह ।**
**प्राप्तापन्नौ द्वितीयान्तैः परःशतमुखास्तथा ॥ १४**
प्रादयो[339] गताद्यर्थाः प्रथमान्तैः । अत्यादयः क्रान्ताद्यर्थाः द्वितीयान्तैः । अवादयः क्रुष्टाद्यर्थास्तृतीयान्तैः । पर्यादयो ग्लानाद्यार्थाश्चतुर्थ्यन्तैः । निरादयः क्रान्ताद्यर्थाः पंचम्यन्तैः नित्यं समस्यन्ते । स च तत्पुरुषः । तथा हि ।
प्रगत आचार्यः प्राचार्यः । संगतोऽर्थः समर्थः ।
**द्वितीया** । खट्वामतिक्रान्तोऽअतिखट्वः[340] । उत्क्रान्तो वेलामुद्वेलः ।
**तृतीया** । अवक्रुष्टः कोकिलयाऽवकोकिलः । परिणद्धो वीरुद्भिः परिवीरुत् ।
**चतुर्थी** । अध्ययनाय परिग्लानः पर्यध्ययनः । उत्सुकः संग्रामाय उत्सङ्ग्रामः ।
**पंचमी** । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । अपक्रान्तः शाखाया अपशाखः ।
**बहुलकात्षष्ठ्यापि** स्यात् । अंतर्गतो गार्ग्यस्यांतर्गार्ग्यः । तथा प्राप्तापन्नौ शब्दौ प्रथमान्तौ द्वितीयान्तनाम्ना समस्येते । प्राप्ता जीविकां प्राप्तजीविका । एवमापन्नजीविका । "प्राप्तापन्नौ तयाच्चे"ति[341] समासः । आपोऽत्त्वं च । तथा परःशतादयः शब्दा निपात्यन्ते । शतात्परे परःशताः एवं परःसहस्राः परोलक्षाः । "परःशतादिरि"ति[342] समासः । परशब्दस्य पूर्वनिपातः सागमश्च । इति सप्तसु विभक्तिषु तत्पुरुषसमासः ॥

**संप्रति तत्पुरुषे स्यादीनामलुबुच्यते**[343] ।
नाम्यन्तादेकस्वरान्नाम्नः[344] खानुबन्धे उत्तरपदे[345] परेऽमो लुप् न स्यात् ।[346]
स्त्रियमात्मानं मन्यते स्त्रियंमन्यः । एवं नावंमन्यः । श्रियंमन्यः । "कर्तुः खश्"[347] इति

---

[338] क - प्रात्यवाद्यरगताद्यर्थो , ख - प्रत्यवाद्यागताद्यर्थे

[339] सिद्धहेमशब्दानुशासनम् - प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः (३.१.४७)
प्रादयो गताद्यर्थाः प्रथमान्तैः, अत्यादयः क्रान्तादर्था द्वितीयान्तैः, अवादयः क्रुष्टाद्यर्थास्तृतीयान्तैः, पर्यादयो ग्लानाद्यर्थाश्चतुर्थ्यन्तैः, निरादयः क्रान्ताद्यर्थाः पञ्चम्यन्तैर्नित्यं समासस्तत्पुरुषः स्यात् । प्राचार्यः, समर्थः; अतिखट्वः, उद्वेलः; अवकोकिलः, परिवीरूत्; पर्यध्ययन, उत्सङ्ग्रामः; निष्कौशाम्बिः, अपशाखः; बाहुलकात् षष्ठ्याऽपि - अन्तर्गार्ग्यः । गताद्यर्था इति किम् ? वृक्षं प्रति विद्युत् । अन्य इत्येव - प्राचार्यको देशः ॥

[340] ख - खट्वामतिक्रान्तः स अतिखट्वः

[341] सिद्धहेमशब्दानुशासनम् - प्राप्तापन्नौ तयाच्च (३.१.६३)
एतौ प्रथमान्तौ द्वितीयान्तेन समासस्तत्पुरुषः स्याताम्, तद्योगे चानयोरत् स्यात् । प्राप्तजीविका, आपन्नजीविका ॥

[342] सिद्धहेमशब्दानुशासनम् - परःशतादिः (३.१.७५)
अयं पञ्चमीतत्पुरुशः साधुः स्यात् । परःशताः, परःसहस्राः ॥

[343] क - विभक्तीनामलुपमाह

[344] ख - नाम्यन्तैकस्वरान्नाम्नः

[345] ख - खित्युत्तरपदे

खश्प्र० । “दिवादेः श्यः”[348] इति श्यप्रत्ययः । नामि इति किं । न्यंमन्यः क्ष्म्यंमन्यः एकस्वरादिति किम् । कालिंमन्या वधुंमन्या[349] । एषु “खित्यनव्ययारुषो मोन्तो ह्रस्वश्च”[350] । (तथा टाया अलुप् प्रोच्यते । ओजःप्रभृतिभ्यः उत्तरपदे परे टाया अलुप् स्यात् । ओजसाकृतम् । अंजसाकृतम् । सहसाकृतम् । अंभसाकृतम् । तमसाकृतम् । तपसाकृतम् । अत्र “ओजआदिभ्य”[351] उत्तरपदे परे टाया न लोपः ।) [352] तथा पुंसाऽनुजः । जनुषाऽन्धः । अत्र “पुंजनुषोऽनुजान्ध”[353] इति न लोपः[354] । अथ आत्मशब्दात्परस्य टः पूरणप्रत्यान्ते उत्तरपदे न लोपः ।[355] आत्मनाद्वितीयः । आत्मनाचतुर्थ इत्यादि । ततः परात्मभ्यां ङेः न लुप्[356] । परस्मैपदमात्मनेपदम् । तथा असत्वार्थान्नाम्नो

---

[346] सिद्धहेमशब्दानुशासनम् - न नाम्येकस्वरात् खित्युत्तरपदेऽमः (३.२.९)

समासारम्भकमन्त्यं पदम् उत्तरपदम्, तस्मिन् खित्प्रत्ययान्ते परे नाम्यन्तादेकस्वरात् पूर्वपदात् परस्यामो लुब् न स्यात् । स्त्रियंमन्यः, नावंमन्यः । नामीति किम् ? क्ष्मंमन्यः । एकस्वरादिति किम् ? वधुंमन्या । खिति किम् ? स्त्रीमानी ॥

[347] सिद्धहेमशब्दानुशासनम् - कर्तुः खश् (५.१.११७)

प्रत्ययार्थात् कर्तुः कर्मणः पराद् मन्यतेः खश् स्यात् । पण्डितम्मन्यः । कर्तुरिति किम् ? पटुमानी चैत्रस्य ॥

[348] सिद्धहेमशब्दानुशासनम् - दिवादेः श्यः (३.४.७२)

दिवादेः कर्तृविहिते शिति श्यः स्यात् । दीव्यति, जीर्यति ॥

[349] क, ख - कालिंमन्यः, वधुंमन्यः

[350] सिद्धहेमशब्दानुशासनम् - खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च (३.२.१११)

स्वरान्तस्यानव्ययस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तो यथासम्भवं ह्रस्वादेशश्च स्यात् । ज्ञंमन्यः, कालिंमन्या, अरुन्तुदः । खितीति किम् ? ज्ञमानी । अनव्ययेति किम् ? दोषामन्यमहः ॥

[351] सिद्धहेमशब्दानुशासनम् - ओजोऽञ्जःसहोऽम्भस्तमस्तपसष्टः ( ३.२.१२)

एभ्यः परस्य टावचनस्योत्तरपदे परे लुब् न स्यात् । ओजसाकृतम्, अञ्जसाकृतम्, सहसाकृतम्, अम्भसाकृतम्, तमसाकृतम्, तपसाप्राप्तम् । ट इति किम् ? ओजोभावः ॥

[352] ख - तथा । ओजप्रभृतिभ्यः उत्तरपदे परे टाया अलुप् स्यात् । ओजसाकृतम् । अञ्जसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतमऽऽ । तपसाकृतम् ।

[353] सिद्धहेमशब्दानुशासनम्  - पुंजनुषोऽनुजान्धे (३.२.१३)

पुम्-जनुर्भ्यां परस्य टो यथासंख्यमनुजेऽन्धे चोत्तरपदे लुब् न स्यात् । पुंसाऽनुजः, जनुषाऽन्धः । ट इत्येव - पुमनुजा ॥

[354] ख - इत्यलुप्

[355] ख - तथा आत्मनः परस्य टः पूरणेऽलुप् ।

सिद्धहेमशब्दानुशासनम् - आत्मनः पूरणे (३.२.१४)

अस्मात्परस्य टः पूरणप्रत्ययान्ते उत्तरपदे लुब् न स्यात् । आत्मनाद्वितीयः, आत्मनाषष्ठः ॥

[356] क - परात्मभ्यां चतुर्थीङेर्लुप् न स्यात्

सिद्धहेमशब्दानुशासनम् - परात्मभ्यां ङेः (३.२.१७)

आभ्यां परस्य ङेवचनस्योतरपदे परे नाम्नि लुब् न स्यात् । परस्मैपदम्, आत्मनेपदम् । नाम्नीत्येव - परहितम् ॥

पंचमीङसेर्न लोपः[357] । स्तोकान्मुक्तः अल्पान्मुक्तः । षष्ठी । तथा पश्यद्वाग्दिशो हरयुक्तिदण्डे षष्ठ्या न लुप्[358] । पश्यतोहरः । वाचोयुक्तिः । दिशोदण्डः । तथा देवानांप्रियो जाल्मः[359] । अत्राप्यलुप् । ततः वाचस्पतिः सुरगुरुः । वास्तोष्पतिरिन्द्रः दिवस्पतिः । दिवोदासो धन्वन्तरिः ।[360] एते निपातनादलुपि च सिद्धाः । तथा ऋदन्तानां विद्यया योन्या वा कृते संबंधे सति[361] प्रवृतानां षष्ठ्या उत्तरपदे परे लुप् न स्यात् ।[362] होतुःपुत्रः | पितुःपुत्रः । पितुरंतेवासी । तथा मातुःष्वसा मातुःस्वसा मातृष्वसा । एवं पितुःष्वसा पितुःस्वसा पितृष्वसा । स्वसुःपतिः । स्वसृपतिः[363]। अत्र "स्वसृपत्योर्वा"[364] इति षष्ठ्या वा लुप् । लुपि च "मातृपितुः स्वसुरि"ति[365] स्वसृशब्दस्य नित्यं षत्वम् । अलुपि तु "अलुपि वे"ति[366] वा षत्वम् । (मूर्धमस्तकवर्जात्स्वांगवाचिनो नाम्नः कामवर्जे उत्तरपदे सप्तम्या लुप् न स्यात् । कण्ठेकालः । उरसि लोमानि यस्य

---

[357] ख - असत्वाङ्ङसेः अलुप्

सिद्धहेमशब्दानुशासनम् - असत्त्वे ङसेः (३.२.१०)

असत्त्वे विहितस्य ङसेरुत्तरपदे परे लुब् न स्यात् । स्तोकान्मुक्तः । असत्त्व इति किम् ? स्तोकभयम् । उत्तरपद इत्येव - निःस्तोकः ॥

[358] क - पश्यदादिपदत्रयात् षष्ठ्या हरादिपदत्रये लुप् न स्यात् ।

सिद्धहेमशब्दानुशासनम् - पश्यद्वाग्दिशो हरयुक्तिदण्डे (३.२.३२)

एभ्यः परस्याः षष्ठ्या यथासंख्यं हरादावुत्तरपदे लुब् न स्यात् । पश्यतोहरः, वाचोयुक्तिः, दिशोदण्डः ॥

[359] क - देवानांप्रिया हाला

सिद्धहेमशब्दानुशासनम् - देवानांप्रियः (३.२.३४)

अत्र षष्ठ्या लुब् न स्यात् । देवानांप्रियः ॥

[360] सिद्धहेमशब्दानुशासनम् - वाचस्पतिवास्तोष्पतिदिवस्पतिदिवोदासम् (३.२.३६)

एते समासाः षष्ठ्यलुपि निपात्यन्ते नाम्नि । वाचस्पतिः, वास्तोष्पतिः, दिवस्पतिः, दिवोदासः॥

[361] ख - नास्ति

[362] सिद्धहेमशब्दानुशासनम् - ऋतां विद्यायोनिसम्बन्धे (३.२.३७)

ऋदन्तानां विद्यया योन्या च कृते सम्बन्धे हेतौ सति प्रवृत्तानां षष्ठ्यास्तत्रैव हेतौ सति प्रवृत्ते उत्तरपदे लुब् न स्यात् । होतुःपुत्रः, पितुःपुत्रः, पितुरन्तेवासी । ऋतामिति किम् ? आचार्यपुत्रः । विद्यायोनिसम्बन्ध इति किम् ? भर्तृगृहम् ॥

[363] क - नास्ति

[364] सिद्धहेमशब्दानुशासनम् - स्वसृपत्योर्वा (३.२.३८)

विद्यायोनिसम्बन्धनिमित्तानाम् ऋदन्तानां षष्ठ्याः स्वसृपत्योरुत्तरपदयोर्योनिसम्बन्धनिमित्तयोर्लुब् वा न स्यात् । होतुःस्वसा, होतृस्वसा; स्वसुःपतिः, स्वसृपतिः । विद्यायोनिसम्बन्ध इत्येव - भर्तृस्वसा, होतृपतिः ॥

[365] सिद्धहेमशब्दानुशासनम् - मातृपितुः स्वसुः (२.३.१८)

आभ्यां परस्य स्वसुः सस्य समासे ष् स्यात् । मातृष्वसा, पितृष्वसा ॥

[366] सिद्धहेमशब्दानुशासनम् - अलुपि वा (२.३.१९)

मातृपितुः परस्य स्वसुः सस्यालुपि समासे वा ष् स्यात् । मातुःष्वसा, मातुःस्वसा; पितुःष्वसा, पितुःस्वसा ॥

स उरसिलोमा ।)[367] तथाऽदन्तव्यंजनान्ताभ्यां प्रायः सप्तम्या न लुप्[368] । क्वचिन्नामसंज्ञायाम् । क्वचिदनामसंज्ञायाम् । तिलानां सदृशास्तिलकाः । "तस्य तुले कः"[369] इति कप्र० । अरण्येतिलकाः । युधि स्थिरः युधिष्ठिरः । "गवियुधेः स्थिरस्ये"ति[370] षत्वम् । स्तम्बेरमः । गेहेनदी । गेहेशूरः भस्मनिहुतं इत्यादि । तथा बिलेशयः (बिलशयः)[371] । वनेवासी वनवासी । ग्रामेवासः ग्रामवासः । अत्र[372] "शयवासिवासेष्वकालादि"ति[373] वा लोपः । तथा । वर्षादिभ्यो जे परे वा लोपः[374] । वर्षेजः वर्षजः । क्षरेजः क्षरजः । वरेजः वरजः । अप्सुजं अब्जम् । सरसिजं सरोजम् । उरसिजः उरोजः । मनसिजः मनोजः । तथा । दिवादिभ्यो जे परे नित्यमलोपः[375] । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेजः । वर्षे जातो वर्षेजः[376] । "क्वचिदि"ति[377] डप्रत्ययः । एवं सर्वत्र डप्रत्ययः स्यात् ।

---

[367] ख - नास्ति

सिद्धहेमशब्दानुशासनम् - अमूर्द्धमस्तकात् स्वाङ्गादकामे (३.२.२२)

मूर्द्धमस्तकवर्जात् स्वाङ्गवाचिनोऽद्व्यञ्जनात् परस्याः सप्तम्याः कामवर्जे उत्तरपदे लुब् न स्यात् । कण्ठेकालः । अमूर्द्धमस्तकादिति किम् ? मूर्द्धशिखः, मस्तकशिखः । अकाम इति किम् ? मुखकामः ॥

[368] सिद्धहेमशब्दानुशासनम् - अद्व्यञ्जनात् सप्तम्या बहुलम् (३.२.१८)

अदन्ताद्व्यञ्जनान्ताच्च परस्याः सप्तम्या बहुलं नाम्नि लुब् न स्यात् । अरण्येतिलकाः, युधिष्ठिरः । अद्व्यञ्जनादिति किम् ? भूमिपाशः । नाम्नीत्येव - तीर्थकाकः ॥

[369] सिद्धहेमशब्दानुशासनम् - तस्य तुल्ये कः संज्ञाप्रतिकृत्योः (७.१.१०८)

तस्येति षष्ठ्यन्तात् तुल्येऽर्थे कः स्यात् । संज्ञायां प्रतिकृतौ च विषये । अश्वकः, अश्वकं रूपम्॥

[370] सिद्धहेमशब्दानुशासनम् - गवियुधेः स्थिरस्य (२.३.२५)

आभ्यां परस्य स्थिरस्य सः समासे ष् स्यात् । गविष्ठिरः, युधिष्ठिरः ॥

[371] पाठे नास्ति (लघुवृत्त्यामस्ति)

[372] क - नास्ति

[373] सिद्धहेमशब्दानुशासनम् - शयवासिवासेष्वकालात् (३.२.२५)

अकालवाचिनोऽद्व्यञ्जनात् परस्य सप्तम्या एषूत्तरपदेषु लुब् वा न स्यात् । बिलेशयः, बिलशयः; वनेवासी, वनवासी; ग्रामेवासः, ग्रामवासः । अकालादिति किम् ? पूर्वाह्णशयः ॥

[374] सिद्धहेमशब्दानुशासनम् - वर्षक्षरवराप्सरःशरोरोमनसो जे (३.२.२६)

एभ्यः परस्याः सप्तम्या जे उत्तरपदे लुब् वा न स्यात् । वर्षेजः, वर्षजः; क्षरेजः, क्षरजः; वरेजः, वरजः; अप्सुजम्, अब्जम्; सरसिजम्, सरोजम्; शरेजः, शरजः; उरसिजः, उरोजः, मनसिजः, मनोजः ॥

[375] सिद्धहेमशब्दानुशासनम् - द्युप्रावृड्वर्षाशरत्कालात् (३.२.२७)

एभ्यः परस्याः सप्तम्या जे उत्तरपदे लुब् न स्यात् । दिविजः, प्रावृषिजः, वर्षासुजः, शरदिजः, कालेजः ॥

[376] क - वर्षजः

[377] सिद्धहेमशब्दानुशासनम् - क्वचित् (५.१.१७१)

उक्तादन्यत्रापि यथालक्ष्यं डः स्यात् । किञ्जः, अनुजः, स्त्रीजम्, ब्रह्मज्यः, वराहः, आखा ॥

इति श्रीजयानन्दसूरिकृतं समासप्रकरणं (तच्छिष्येण आशानन्ददयासुंदरदलदलमागजृणिकाद्याक्षरनाम्ना)[378] किंचिद्व्याख्यातम् । संपूर्णम्[379]।

---

[378] क - यथाज्ञातं

[379] क - सं (शम् वा संपूर्णम् वा)